


# श्रीमहाराणाप्रतापसिंह-चरितम्



लेखकः

**हसूरकरोपाह्वः श्रीपादशास्त्री**

( न्यायतीर्थः, मीमांसातीर्थः, वेदान्ततीर्थः सांख्यसागरश्च )

एतच्च

पुण्यपत्तने

जगद्धितेच्छुनाम्नि यंत्रालये तदधिपतिना

प्रकाशकस्यकृतेमुद्रापितम्

शाकः—१८४१ ख्रिस्ताब्दः—१९२०



मूल्यम्—सभ्यानांकृते १॥ सार्धोरूप्यकः.

विद्यार्थिनांकृते १। सपादः.

# भारतवीररत्नमालायाः



## प्रस्तावना.



सभ्याः ! सरलमतयो बान्धवाः ! विदितमेव व सर्वेषां संस्कृतभाषायाः सकलप्रचलितदेशभाषाजननीत्वं तथैव तदीयमलौकिकं सौन्दर्यं, अर्थगांभीर्यमपि. प्राचीनैर्मुनिभिर्लिखिता ग्रंथा अस्यां सहस्रशो विराजन्ते. दुर्दैवतः सेयमार्यभाषा समं भारतवासिभिर्दैन्यं प्राप्ता सम्प्रति कथंकथमपि जीवति. यद्यपि नाम राजकीयविद्यालयेष्वियं पाठ्यते तथापि सा गौणीति पाठ्यते न प्रामुख्येन. तेनास्यां प्रवीणास्तथा न भवन्ति भारतवासिनो यथा प्राचीनाः पण्डिताः. किंच—ये खलु अस्यां गीर्वाणवाण्यां सन्ति ग्रंथास्ते तत्वज्ञानप्रतिपादकाः प्रायो बुद्धिमतामप्यगम्याः किमुत साधारणमतीनां जनानां ! यानि च काव्यानि तानि समासबहुल्येन दुर्बोधानि तेन चेमां पठितुमुद्यता अपि बहवो निरुत्साहा भवन्ति. तदेतत्सर्वं वीक्ष्याहमस्यां गीर्वाणभाषायां वीराणां वा साधूनां वा सुलभानि चरितानि लिखितुं प्रयते. अतएव यथा बालानां प्रवेशोऽनायासेन तेषु भवेत्तथैवाहं प्रयतिष्ये. समासबाहुल्यं संधिप्राचुर्यं चास्याः संस्कृतभाषाया अधिगमे तथा सर्वतः प्रसारे निरतिशयं प्रतिबन्धकमिति ज्ञात्वा यथाशक्ति तत्परिहरिष्यामि. यत्र यत्र च वैकल्पिकं संधिमुदाहरन्ति वैयाकरणाः "यथासंहितैकपदे नित्येत्यादि" तत्र विवक्षामनुसृत्य संधीन्न करिष्यामि. किंबहुना—यथा मे पाण्डित्यं बालबोधाय स्यात्तथा सर्वथा प्रयतिष्ये.

वाचकाः ! एतदर्थमेव 'भारतवीररत्नमाला' मया ग्रथितुं प्रारब्धा, यस्या आदिमं रत्नं 'श्रीमन्महाराणाप्रतापसिंहः' इति. अस्यां मालायां लोकोत्तराणां पुरुषाणामेव चरितरत्नानि ग्रथितानि भविष्यन्ति इति शम्.

लेखकः



# ग्रन्थप्रस्तावना



प्रियमहाभागाः ! बान्धवाः ! अद्य खलु परममान्यस्य मृत्युलोकेन्द्रस्य अपारधैर्यखनेः निश्चयनिधेः महाराजस्य पुण्यश्लोकस्य सकलभारतवासिजनगीतकीर्तेः उदयपुराधीशस्य श्रीप्रतापसिंहस्य चरितामृतं देशबान्धवेभ्यो भवद्भ्य उपहारीकुर्वतो मे मनो नितरां मोदते. क्व धन्यः सकलभारतवर्षललामभूतः मूर्तः पराक्रम इव महाराजः प्रतापसिंहः क्व च तदीया अलौकिक्यः परमविस्मयकराः प्रतापततयः, क्व च मादृशोऽदृष्टवीरवीर्योऽवनतिसमयजन्मा जन्तुः, तथापि केवलं सुप्रसिद्धेषु प्रतापसिंहगुणेषु लुब्धेन मया चरितमिदं लिखितं. बाल्ये च भारतेतिहासं पठतो मे मनसि यथा शिवराजगुणा बद्धमूला अजायन्त तथैव—प्रतापसिंहस्य. महाराजस्य निरतिशयां स्वातंत्र्यप्रीतिं तथा स्वकुलपावित्र्यरक्षणे धैर्यमवलोक्य नितान्तं विस्मितोऽहं बहोः कालात्तद्गुणान्वर्णयितुं संकल्पमकरवम्. स च संकल्पोऽनेकैः सांसारिकैः विघ्नैर्विघ्नितः सफलो न बभूव. सम्प्रति च तं सफलं वीक्ष्य ममात्माऽत्यन्तं प्रसीदति. यथा हि देवर्णादीनि ऋणानि सन्ति तथैव इदमपि एकं ऋणं—यत् स्वपूर्वजानां प्रतापानां वर्णनं. यस्मिन् देशे तरुणाः स्वपूर्वजानां अलौकिकं प्रतापं न वर्णयन्ति. न तदनुरूपं वर्तन्ते स च देशः कदापि उन्नतिं न गमिष्यति. बान्धवाः ! यद्यपि मदीये लेखे बहवो दोषाः स्युः तथापि निर्दोषं परमपवित्रं महाराजप्रतापसिंहचरितं वीक्ष्य सन्तुष्टा यूयमवश्यं भविष्यथ.

अस्मिन्नेव चरिते लिखितः पृथ्वीराजलेखः कस्य सहृदयस्य हृदयं न हरेत्! महासाध्व्या महाराज्या भाषणमपि कस्य चित्तं न रंजयेत्! निसर्गतएव अतिरमणीया इमे बोधप्रदाः प्रसंगाः. नास्ति तत्र लेखकचातुर्यस्य आवश्यकता. अन्ते सर्वानपि वो देशबान्धवान् अत्र कटाक्षक्षेपाय विज्ञप्य विरमामि.

विदुषांवशंवदः

**श्रीपादशास्त्री.**



## ( मुख्यविषयानुक्रमः )

-:o:-





# ( अवान्तरविषयानुक्रमः )



श्री

# अर्पणपत्रिका.

श्रीरामजी

श्रीमन्महाराजाधिराजमहीमहेन्द्र-
यावदार्यकुलदिवाकरमहाराणाजी
श्री १०८ धीरवीरचिरप-
तापिमेदपाटाधीशचरणेभ्यः
सकललोकाभिनन्दितप्रजा-
वात्सल्यस्वधर्मपरिपालन-
प्रमुखगुणानुरक्तेन हृमु-
रकरोपाव्हेन श्रीपाद
शास्त्रिणोपायनी-
कृतम्



# राजस्थानवर्णनम.





( १ )



अस्ति अस्मिन् अतिविस्तीर्णे सकलभूतलविख्याते आर्यावर्ते अतिप्रसिद्धः वीररत्ननिवहखनिः. अतिदुर्गमैः विशालशिखरैः गगनभेदिभिरिव स्वावासभूमिरक्षकैरिव सुलभतरपरिपूर्णफलमूलजलादिभिः सततसंचरत्क्रूरव्याघ्रादिश्वापदघोरारावभयंकरैः सर्वतः प्रसृतशत्रुचाराविज्ञातासंख्यजननिवासार्हगुहासहस्त्रालंकृतैः अरवलीमढारनीलकंठप्रभृतिभिः पर्वतगणैः परिवेष्टितः, सत्यपालनतत्परजनः, निजपातिव्रत्यरक्षणदक्षनारीजनः, अतिशुभ्रैः सर्वतः प्रसृतया श्रीमन्महाराजस्य प्रतापसिंहस्य विमलया कीर्त्येव धवलीकृतैः परमप्रचण्डैः शुभ्रशिलाखण्डैः व्याप्तः,

अतिविमलरुचिरसलिपरिपूर्णैः सुरम्यकमलिनीविचित्रकमलरमणीयैः सुविशालतटवृक्षावलीसमाच्छादितैः पुष्करराजसमुद्रउदयसागरप्रमुखैस्तडागैर्भूषितः, शालिगोधूमचणकप्रभृतिधान्यजनकैः सुसंस्कृतैः क्षेत्रैः समलंकृतः, देवालयाविध्वंसकेभ्यः यवनेभ्यः सुरक्षितैः श्रीनाथएकलिंगप्रमुखैः भक्तकल्याणकरैः देवैस्तथा तदालयैश्च दर्शनीयः, पालयिता सज्जनानां, त्रासयिता मदोन्मत्तानां, सुखयिता सर्वेषां, पापानामभूमिः, परमविख्यातैः अनेकपराक्रमिराजपुरुषजन्मदायिभिः नृपकुलैः शासितः, अपारकोशागारमिव सर्वस्यार्यावर्तस्य, स्वातंत्र्यदेव्या निवासभवनमिव, राजपुतानेत्यपरनामधेयः राजस्थाननामा अतिविस्तीर्णः देशः.

यस्य च उत्तरेण—यमुना नदी युधिष्ठिरादिभिः परमपूज्यभूपतिभिः सुपालितं दिल्लीत्यपरनामधेयं इन्द्रप्रस्थनगरं च. पूर्वेण—सोऽयं अतिविस्तीर्णः गोधूमजनकत्वेन प्रसिद्धः इतिहासविख्यातः अयोध्याप्रान्तः. दक्षिणेन—सुसम्पन्नधार्मिकजनः गुर्जरदेशः. पश्चिमेन—सुदृढशूरजनावासः सिंधनामा कच्छनामा च देशः.

यश्च—यथेच्छसंचरणपरिपुष्टाभिः स्वघातशंकाविरहिताभिः दुग्धधवलाभिः गोभिः, सुवर्णस्य रत्नानां प्रायः सर्वेषामेव धातूनां खनिभिः, शूरैः शब्दवेधकुशलैः धानुष्कैः खड्गिभिः वनेचरप्रभृतिभिः देशवासिभिः, अतिविस्तृतैः विशालवृक्षराजिमण्डितैः अरण्यैः सांबरनामकैः लवणसरोवरैः, अपारमृगजलपरिपूर्णैः वालुकाप्रदेशैः सर्वान् देशान् अतीत्य वर्तते.

यं च—उदयपुर जयपूर जोधपूर किसनगड नागोर किरोली चन्देर भरतपूर अलवर अजमीरप्रभृतीनि, सुव्यवस्थितरचनानि

परमविख्यातराजकुलसमुत्पन्नैः राजपुरुषैः रक्षितानि नगराणि शोभयन्ति.

येन च—समुत्पादिताः सिंहविक्रमाः पुरुषसिंहाः सहसा आक्रान्तयवनसैन्या अगणितान् रिपुसैनिकान् निहत्य रणांगण एवाशेरत नतु तान् स्वपृष्टमदर्शयन्.

यस्मै च—निखिलार्यावर्तवासिनः विज्ञातसकलवृत्तान्ताः, परद्वीपवासिनोऽपि जनाः स्पृहयन्ति. विलोक्य च आत्मानं धन्यं मन्यन्ते.

यस्माच्च—केचन नवनीरदश्यामलाः, केचन शारदज्योत्स्नासिताः, केचन संध्यापयोदकपिशाः, केचन शाद्वलहरिताः, केचन किसलयच्छविभासुराः, विचित्राः पाषाणाः प्रादुर्भवन्ति.

यस्य च—प्राकृतकविगीतानि वीररसमयानि काव्यानि निशम्य श्रोता समुत्कः संजायत एव.

यस्मिंश्च—मधुरजलपरिपूर्णा कृष्युपयोगिन्यः बनास चंबल खारीत्यभिधाना महत्यो नद्यो वहन्ति.

---

## ( २ )

अस्मिन् राजस्थाने रजपूतक्षत्रियाणामागमनात् पूर्वं भील, मेणा, मीर, मंज्ञका आरण्यका अनार्यजना एव न्यवसन्. ते च वन्यमृगान् हत्वा स्वोदरपर्याप्तं अन्नं लब्ध्वा अजादीन् पालयन्तः कृतकृत्या वनाद्वनान्तरं पर्याटन्. एतेऽपि न राजस्थानस्य प्रथमनिवासिनः किंतु हिमालयदरीमार्गैः समागता आर्या यदा अत्रत्यान् अनार्यान् अजयन् तदा तद्भीत्या दुर्गमस्थानेषु निवसतामनार्याणां वंशजा एव. एते च अधुनापि—सततं दरीषु निव-

सन्तः अकस्मात्कंचन ग्रामं लुण्ठित्वा लब्धं द्रव्यं विभज्य गृण्हन्तः स्वसंसारयात्रां कुर्वन्ति. यद्यपि एते सर्वेपि खड्गयुद्धकुशलाः तथापि प्राधान्येन तेषां शस्त्रं धनुः. इमे चेत्थं शब्दवेधकुशला यत् अतिदूरादपि शब्दं निशम्य तस्मिन्नेव क्षणे तल्लक्ष्यं शरेण विध्यन्ति. एते च संघशः अतिदुर्गमाणि वनानि पर्यटन्ति. वाचकाः ! अधुनाऽपि यूयं राजस्थानं गता अरवलीदरीषु निवसत एतान् पश्येत.

## ( ३ )

यदा च आर्या इमां भारतभूमिं जित्वाऽत्रैव कृतनिवासा अतिष्ठन् तदा राजस्थाने क्षत्रियकुलानि कानिचित् अवसन्. ततश्च महंमदीयैः आर्यावर्ते जिते अन्यानि बहूनि निवासार्थमागच्छन्. साम्प्रतं तु अस्मिन् राजस्थाने रजपूतक्षत्रियाणां पंचाशत्कुलानि विराजन्ते. तानि एतानि कुलानि राजस्थानेतिहासे प्रसिद्धानि.

वाचकाः ! वयं न अधुना राजस्थानस्येतिहासं लिखितुं प्रवृत्ताः किंतु महाराजस्य प्रतापसिंहस्य परमपवित्रं चरितं. तत्र यद्यपि पूर्वप्रसंगदर्शनार्थं संक्षेपेण राजस्थानवृत्तनिरूपणमपि आवश्यकं तथापि सर्वेषां राजकुलानां वर्णनमनावश्यकमिति ये प्रसिद्धा वंशाः तानेव निरूपयामः. राजस्थाने तु सामान्यतः प्राधान्येन सूर्यचंद्रवंशावेव स्तः यद्यपि अधुना तयोः स्वरूपं तथा नामान्यपि भिन्नानि तथापि न तन्मूलकत्वं हीयते. ते च वंशाः क्रमेण यथा—

| ( सूर्यवंशः ) | ( राजधानीनगरम् ) |
|---|---|
| १ गेहलोटवंशः | १ उदयपुरं |
| २ राठोडवंशः | २ जोधपुरं |
| ३ कच्छवाहवंशः | ३ जयपुरं |
| ४ गोहेलवंशः | ४ भावनगरं नांदोडनगरं |
| ( चन्द्रवंशः ) | |
| १ भाटीवंशः | १ जसलमीरं |
| २ जाडेजावंशः | २ जामनगरं |

वाचकाः ! अस्माद्वंशद्वयात् अन्यान्यपि राजकुलानि विद्यन्ते. तेषु प्रसिद्धे—' चव्हाणवंशः. झालावंश इति. पाठकाः. ' संक्षेपेण राजस्थानस्थसुप्रसिद्धक्षत्रियकुलवृत्तांतज्ञानार्थं एतेषां कुलानां इतिवृत्तं लिखामि. तत्रापि च—गेहलोटवंशस्य अस्मच्चरित्रनायकवंशत्वेन अग्रे वर्ण्यमानतया साम्प्रतं अन्यान् वंशान् वर्णयामि.

२ राठोडवंशः—अस्य वंशस्य मूलपुरुषः श्रीसीतानाथस्य पुत्रः कुश इति प्राचीना इतिहासकारा वदन्ति. तद्वंश्याश्च नृपाः प्रथमं कोसलदेशाधिपाः सन्तः पश्चात् केनापि कारणेन ते कान्यकुब्जदेशं आगत्य सुप्रसिद्धं कनोजनगरं स्वराजधानीं चक्रुः खिस्तीयपंचमशकादूर्ध्वं यदा महंमदीया आर्यावर्तं प्रविश्य क्षत्रियकुलानि नाशयितुमारभन्त तदा तैरेव समाक्रान्ते कान्यकुब्जदेशे तदानींतनः राठोडवंशभूषणः ' जयचंदः ' पलायमानो गंगायां मग्नः स्वर्गमगच्छत्. तदीयः पुत्रः शिवजिः मरुदेशमागत्य तत्र नूतनमेव राज्यं स्थापयामास, साम्प्रतं ये खलु राजानः मरुदेशे राज्यानि परिपालयन्ति तेषां पूर्वजः अयमेव

शिवाजि:. एते राठोडवंश्याः पुरुषा अति शूराः तत एव सर्वेऽपि दिल्लीश्वरः तान् सेनानायकान् व्यधुः.

३ कच्छवाहवंशः—इदमपि कुलं भगवतः रामचन्द्रस्य ज्येष्ठपुत्रात् कुशादेव प्रादुर्भूतम्. अतएव कच्छवाहशब्दोऽपि कुशवाहशब्दस्य अपभ्रंशः. एतद्वंशजा अपि कोसलदेशात् निर्गत्य राजस्थानमागताः स्वराज्यं स्थापयामासुः. तेषामेव अन्यतमः कश्चन शूरः सुप्रसिद्धं ' अंमेर ' नगरमागत्य तत्रापि सर्वान् पूर्ववासिनः 'मेणप्रभृतीन् अनार्यान् विजित्य स्वराज्यं विरचयामास एतद्वंशजा एव जयपुरनगरमधिवासयन्तस्तदधिपाश्च अभवन्. अधुनाऽपि ये खलु जयपुराधिपाः—ते कच्छवाहवंशजा एव.

४ गोहेलवंशः—एषोऽपि वंशः सुप्रसिद्धात् सूर्यवंशादेव समुद्भूतः. प्रथमत एतद्वंशजा मरुदेशमागत्य कृतनिवासाः कुतश्चिन् कारणान् तं विहाय सौराष्ट्रमागच्छन्. तत्रापि अलब्धस्वास्थ्या राजस्थानमागत्य नूतनमेव भूविभागमाक्रम्य न्यवसन् तस्य भूविभागस्य नामाऽपि ते 'गोहेलवाडा' इति चक्रुः. अस्मिन् प्रदेशेऽधुनाऽपि ' सिहोर भावनगर नांदेड ' इत्यादीनि नगराणि विराजन्ते. तत्रापि भावनगरराज्यं सुप्रसिद्धम्.

५ भाटीवंशः—एते खलु यदुकुलोपन्ना यादवा एव एतत्कुलजैः बहुभिः पराक्रमिभिः नरवीरैः सिंधुनदस्य परस्तादपि स्वराज्यमर्यादा स्थापिता. गिझनीसमरकन्दप्रभृतीनि साम्प्रतं यवनराजधानी नगराणि तैरेव वासितानि. अथ यदा क्रमेण हीनपराक्रमान् तद्वंशजान् सर्वेपि यवनादयः परकीया बलादेव तस्मात् देशात् निरवासयन्, तदा ते पंजाबदेशमागत्य अलब्धस्वास्थ्याः सतलजनाम्न्या नद्याः तीरेण प्रवसंतः नूतनं जसल-

मीरनामकं राजधानीनगरमकार्षुः. साम्प्रतमपि तत्र एतद्वंशजा भूपालाः सम्यक् राज्यं कुर्वन्ति. यद्यपि एतत्कुलसंभवाः सर्वे पुरुषा यादवा एव, तथापि केनापि कारणेन तैः स्वनाम त्यक्त्वा 'भाटीवंश' इति नूतनमेव नाम धृतम्.

६ जाडेजावंशः—एवमेव अयमपि वंशोऽतिविस्तीर्णस्य यदुवंशस्यैव शाखाभूतः. एतद्वंशजाः सम्प्रति 'कच्छभुज' नाम्नि प्रदेशे राज्यं कुर्वन्ति. एते च स्वात्मानं 'जामसाहेब' पदेन व्यपदिशन्ति. व्युत्पादयन्ति चेमं शब्दं—'वयं' शामनामकात् देशात् समागता इति पूर्वं सर्वे जना अस्मान् शामशब्देनैव व्यपादिशन्. अग्रे च तस्यैव शामशब्दस्यायं जामशब्दोऽपभ्रंशोऽभूदिति. अन्ये चेमं वंशं पुराणप्रसिद्धाया जाम्बुवत्या वंशजमिति कथयन्ति.

७ चव्हाणवंशः—अयं वंशः साक्षादेव वैश्वानरसंभव इति तद्वंशजा मन्यन्ते. कथयन्ति च तद्विषयिणीमिमामाख्यायिकाम्—यदा खलु अस्मिन् भारतवर्षे बौद्धधर्मः परं विवृद्धः तदा यज्ञादीनामभावात् सर्वे देवा अत्रस्यन्. ते च सर्वेऽपि मिलित्वा परमात्मानं विज्ञापयामासुः. स च परमेश्वरः तद्विज्ञापनामंगीकृत्य ब्राह्मणान् यागविधानार्थं प्रैरयत्. तेऽपि जगदीशनिदेशानुरूपं राजस्थानगते अबूनाम्नि पर्वते यज्ञं चक्रुः तस्माच्च यज्ञकुण्डात् चत्वारः पुरुषा निरगच्छन्. तेषामेव इमानि चत्वारि अग्निकुलानि. तेष्वन्यतममिदं चव्हाणकुलं. अस्मिन् कुलेऽतिशूराः क्षितिपालाः सनातनधर्मपालका एव अजायन्त. योऽयं प्रसिद्धः चक्रवर्ती दिल्लीश्वरः पृथ्वीराजः सोऽपि जन्मना इदमेव कुलमलमकरोत्. साम्प्रतमपि ये खलु 'बुन्दीकोटा' नगराधिपास्तेऽपि चव्हाणवंशस्योपशाखासंभूता एव. एतेऽपि परमधर्मशीला अति-

शूराः यदा च दिल्लीश्वरः शहाजहाननामा यवनाधिपः स्वपुत्रैः पराजितस्तदा महता दैन्येन एतानेव साहाय्यार्थमाव्हयामास. तेऽपि च त्वरितं सहायीभूय तमरक्षन्.

वाचकाः ! यो हि झालावंशः सुप्रसिद्धः स च अस्मच्चरित्र-नायकस्य मातृवंश इति तमग्रे सविस्तरं निरूपयिष्यामि. बान्धवाः! इमे वंशाः केवलं मया स्वरूपप्रदर्शनार्थं प्रदर्शिताः. वस्तुतस्तु अधुनाऽपि अस्मिन् राजस्थाने अलौकिकशौर्याः सह-स्रशः पुरुषा विराजन्ते. अनेकानि च राजकुलानि यथाशक्ति स्वप्रजा न्यायेन परिपालयन्ति.

## ( ४ )

इमे सर्वेऽपि राजस्थानवासिनः प्रायः स्वात्मानं सूर्यचन्द्रप्र-भृतिभ्यः महावंशेभ्यः संभूतान् मन्यमानाः सदैव क्षत्रियवृत्या जीवने धन्यं मन्यन्ते. परमविपन्निमग्नोऽपि रजपूतक्षत्रियः कदापि वैश्यवृत्तिं वा शूद्रवृत्तिं वा मोदेन न स्वीकुर्यात् यथा सैनिकवृ-त्तिम्. स च समीचीनमेकमश्वं परिपालयन् भल्लमंडितहस्तः खड्गलताविराजमानमध्य एव सदा भवेत्. यदा च क्षत्रियराजाः युद्धार्थं वा मृगयार्थं वाऽधुनापि बहिर्गच्छन्ति तदा तेऽग्रेधा-वत्कनकदण्डधारिसेवकगणाः, बन्दिजनगीयमानयशस्तोत्राः, अग-णितसादिगणमध्यविराजमानवैजयन्तीकाः महतैश्वर्येण समन्विता एवप्रयान्ति रजपूतक्षत्रियाश्च मौलान् जनान् बहु मन्यन्ते. तत्रापि ये खलु भूस्वामिनः ते परं सन्मानार्हा भवन्ति. सर्वेऽपि रजपूतक्षत्रियास्तेभ्य एव प्रथमं स्वकन्या वितरन्ति. यद्यपि

वणिग्वृत्या संपादितागणितधनः स्यात्कश्चित्तथापि स न तादृशं सन्मानं लभते यादृशं स्वल्पभूरपि क्षत्रियः.

रजपूतक्षत्रियाश्च विशेषतः शौर्येणैव अलौकिकाः यद्यपि अधुना पंजाबदेशवासिनो महात्मनो गुरुनानकस्य शिष्याः शीख-संज्ञकाः शूरा इति कथ्यन्ते, तथापि ते केनापि कारणेन शौर्य-गुणं समपादयन्. परन्तु रजपूतक्षत्रिया निसर्गत एव शौर्येण प्रसिद्धाः. तदर्थं चाहमेकां कथां कथयामि.

यदा खलु मोंगलकुलदीपस्य अकबरस्य पुत्रेण ' जहांगीर ' नाम्ना दिल्लीश्वरेण चितोडदुर्गं गृहीतं, तदा सर्वेऽपि रजपूतक्ष-त्रिया राजानः मिलित्वा तद्दुर्गं पुनः स्वायत्तीकर्तुं मतिवकुर्वन्. तत्र मिलितेषु क्षत्रियेषु द्वौ पक्षौ प्रबलावास्ताम्. एकः ' चोंडा-वत ' नामकः, अन्यः ' मुकटावत ' नामा. तौ द्वावपि अहमह-मिकया सर्वसेनाया अग्रेसरत्वसन्मानलाभाय अकलहायेताम्. चितोडनराधीशस्तु तौ द्वावपि पक्षौ जगाद— यो हि पक्षः चितोडदुर्गस्य समीपवर्ति अन्तालनामकं दुर्गं स्वायत्तीकरिष्यति स एव सर्वसेनाग्रेसरत्वसन्मानं लप्स्यत इति. इमामाज्ञामंगीकृत्य तौ द्वावपि पक्षौ तस्य दुर्गस्य समीपमनुदितएव भगवति सूर्य-नारायणे समागच्छताम्. द्वितीयः पक्षः तद्दुर्गं सम्यगजानात्. स च त्वरया दुर्गकपाटभेदनाय बलाढ्यान् गजान् न्ययुंक्त. ते च गजा हस्तिपकैः सरोषमंकुशैस्ताडिता अपि तीक्ष्णाग्रलोहकील-कमयानि दुर्गकपाटानि भेत्तुं नाशकन्. इत्थं द्वितीयं पक्षमयशा-स्विनमवलोक्य प्रथमः पक्षः पुरःसरो बभूव. तस्य पक्षस्य मुख्यः हस्तिस्कंधादवतीर्य तेषु तीक्ष्णलोहकीलकेषु पृष्टं निधाय हस्ति-पकमाह—हस्तिनं प्रेरय प्रहर्तुं इति. तेन तथाकृते स शूरो वीरः

चोंडावतपक्षमुख्यः तस्मिन्नेव क्षणे स्वर्गं जगाम. परन्तु दुर्ग-कपाटं भिन्नं. तेन भिन्नेन मार्गेण सर्वे तत्पक्षीया जना दुर्गं प्रविष्टास्तस्य शवं दुर्गे न्यक्षिपन्. अघोषयंश्च—'अस्माभिरेवेदं दुर्गं विजितं इति. तदानीं च दुर्गाधिपप्रभृतयः सर्वेऽपि यवनाः पाशैरक्रीडन्. रजपुतक्षत्रियाश्च क्रीडासमाप्तिपर्यंतं युद्धारंभात् निवृत्ताः तान् समाप्तक्रीडान् विलोक्य युध्यमाना अचिरादेव सर्वानपि यवनान् परलोकं प्रेषयामासुः चितोडनगराधीशोऽपि श्रुत्वेदं सर्वं वृत्तं सन्तुष्टस्तस्मै चोंडावतपक्षाय सदैव स्वसेनाग्रे-सरत्वसन्मानं ददौ तथैव महतीं भेरीमपि.

यत् खलु दिल्लीश्वराणां यवनानां राज्यं भारतवर्षे निर्विघ्नं बहुकालमतिष्ठत् तत्रापि कारणं रजपुतक्षत्रियशौर्यमेव. एते रज-पुतक्षत्रिया एव दिल्लीश्वरसेनायां प्राधान्येन आसन्. प्रथमत इमे यवना अत्रागत्य मुख्यैः क्षत्रियराजैः समं युद्ध्वा लब्धयशसः तद्वंशजान् शूरान् विलोक्य तेषामेव महतीं सेनां निर्ममुः. किंब-ना ? यो हि मानसिंहो नाम जयपुराधीशः अकबरस्य सेनापतिः स केवलरजपुतसेनयैव महान्तं प्रदेशं जित्वा दिल्लीश्वराय समर्प-यामास. एतेषु कृतज्ञतागुणो बाहुल्येन आसीत्तेन यवनाधिपा-सुखेन राज्यानि अत्रावर्धयन्.

यथा हि खलु एतेषु शौर्यं निरतिशयं तथैव शरणागतरक्षण-शीलताऽपि. सुप्रसिद्धस्य अकबरस्य पौत्रः शहाजहाननामा यव-नाधिपः बाल्ये स्वज्येष्ठबन्धुं विजित्य स्वयं दिल्लीश्वरो भवितु मियेष. तदानीं च तस्य पिताऽऽसीदेव. स तु शहाजहानः कनीयसा उदयपुराधीशस्य कर्णराजस्य बन्धुना सहैनं विषय

ममंत्रयत्. स च सरलमतिः भीमः युद्धमेवात्र निर्णायकमिति ब्रुवन् तत्र साहाय्यदानाय प्रतिजज्ञे.

दिल्लीश्वरोऽकबरपुत्रः जहांगीरः स्वपुत्रस्येमं राज्यलोभं चारमुखाद्विज्ञाय तं शासितुं राजसेनामाज्ञापयामास. अचिरादेव प्रवृत्ते युद्धे महाराजकर्णस्य बन्धुः भीमसिंहः परलोकमगात्. शहाजहानश्च पराजितः युद्धात्पलायित उदयपुरनराधीशं कर्णराजं शरणमगच्छत्. विज्ञापयामास च—राजन् ! अधुना मदीयाः-प्राणा युष्मदधीना इति. उक्त्वा चेत्थं स स्वोष्णीषमवतार्य तस्य पुरतो निदधौ. राजा तु परंपरागतं यवनैःसमं वैरं विस्मृत्य तदानीमेव तस्य रक्षणार्थं प्रतिज्ञां चक्रे. शहाजहानोऽपि लब्धस्वास्थ्यः तत्र चिरमुवास.

वाचकाः ! किमिदं नालौकिकमौदार्योदाहरणं ? यैः खलु स्वपूर्वजान् हत्वा समग्रं भारतवर्षं व्याप्तं, शतश आर्यमहिला दासीकृताः, यैर्भोगार्थं बलात्कारेण भृता आर्यललना आत्मान मग्नावक्षिपन्, तेषामेव यवनानां वंशजः शरणागतः भूपालचूडामणिना उदयपुराधीशेन स्वप्राणानपि तृणीकृत्य रक्षित इति किं नाश्चर्यम् ! एवं प्रतिज्ञापालनमपि रजपुतक्षत्रियेषु सुतरामासीत्. एकदा पवित्रसिसोदियाकुलसंभवः राजा लक्ष्मणसिंहो नाम नृपः स्वमंत्रिभिः समं राजसभायामुपविष्टः मरुदेशाधिपेन युवराजाय स्वकन्यां दातुं प्रेषितेन पुरोहितेन विज्ञप्तः सपरिहासमवदत्—अधुना वयं वृद्धाः संवृत्ताः. तेन कोऽपि अस्मान् स्वकन्यापरिग्रहार्थं न विज्ञापयति इति. महाराजस्येमं परिहासं निशम्य सर्वेऽपि मंत्रिणः समं तेन पुरोहितेनोच्चैः जहसुः. इमं च परिहासं कर्णाकर्णिकया समधिगम्य तं सत्यं मन्वानः स युवराजः तया

कन्यया सह विवाहं नांगीचकार. अस्मिन् वृत्ते इत्थं विपरिणते वृद्धो लक्ष्मणसिंहः स्वपुत्रमवोचत्. वत्स ? यदि त्वं मदीयं परिहासं सत्यं मन्यमान इमां कन्यां न परिणेष्यसि तदाऽहं परिणेष्यामि. परन्तु अस्यां कन्यायां यः पुत्रो जायेत स एव राज्याधिकारी भविष्यतीति त्वया प्रतिज्ञातव्यं इति. स च कर्णसमो राजपुत्रः तस्मिन्नेव क्षणे तथैव प्रतिजज्ञे. राजा च तां कन्यां परिणिनाय. अचिरादेव सा कन्या सूतं प्रासूत.

अथ स्वस्य वार्धक्यं विलोक्य राजा लक्ष्मणसिंहः युवराजमवदत्—वत्स ? यन्मया पूर्वमुक्तं तत्सर्वं परिहासमूलकमेव. तदधुना त्वं राज्यं स्वीकृत्य अस्मै तव भ्रात्रे यदिच्छसि तद्वितर येन पश्चात् राज्यार्थं कलहो न भवेत् इति. राजपुत्रस्तु पितुरिदं भाषणं निशम्य साश्चर्यमाह—तातचरणाः ? अयमेव अस्य राज्यस्याधिकारी. यतः पूर्वमेव तथा मया प्रतिज्ञातं. यदि तु पश्चाद्राज्यार्थं कलहो माभूदिति वांच्छत तदाऽयमधुना मदीयहस्तेन राजपदेऽभिषेचनीयः अहं चास्य अमात्यो नाम भूत्वा सर्वं राज्यकार्यं करिष्यामि. यदा चायं समर्थो भवेत् तदा कृत्स्नमपि राज्यभारं तस्मिन् निक्षिप्य वनं गमिष्यामीति. तथैव चक्रे च.

वाचकाः ? जीवतः पितृन् हत्वा स्वज्येष्ठबन्धून् यमालयं सम्प्रेष्य च राज्यलोभं प्ररिपूरयन्तो यवनाः किमस्य राजपुत्रस्य समाः ? भगवतो भीष्मस्य तथा भगवतो रामचन्द्रस्य परमपवित्राभिः कथाभिः सदृशी इयं कथा नवा ? न्यायप्राप्ताया राजश्रियो लीलया त्यागो दुष्करं कर्म ? अस्तु. वाचकाः ? यथा हि एते गुणाः सन्ति रजपूतक्षत्रियेषु तथैव संकटसमये परस्परद्वेषं विहाय साहाय्यकारित्वमपि. तदर्थं च ते रक्षाबन्धनमपि प्रमा-

णीक्रियते. इदं च रक्षाबन्धनं न केवलं पुरुषा एव प्रेषयन्ति. किंतु अंतःपुरवासिन्योऽसूर्यंपश्या राजरमण्योऽपि. अत्रापि अस्ति एका कथा.

एकदा गुर्जरदेशाधिपेन बहादुरशाहानाम्ना यवनेन चितोडदुर्गमाक्रान्तं तदानीं सर्वेऽपि राजस्थानवासिनो रजपुतक्षत्रियास्तस्य दुर्गस्य रक्षणार्थमाजग्मुः तथापि बलवता यवनसैन्येन रुद्धं चितोडदुर्गं प्रतिदिनं शत्रूणां सुजेयमभवत्. अत्रान्तरे निभृतं चितोडनराधीशस्य विक्रमाजितस्य पत्नी कर्णावती रक्षाबन्धनं दिल्लीश्वराय प्रेषयित्वा विज्ञापयामास. यूयं हि मम धर्मबन्धवः ! वयं सर्वेऽपि गुर्जराधिपेन बहादुरशाहेन रुद्धाः कथमपि कालं यापयामः तत्त्वरितमागत्य वयमस्मात् संकटात् मोचनीया इति.

सोऽपि दिल्लीश्वरः अकबरस्य पिता हुमायून इमां विज्ञप्तिमंगीकृत्य साहाय्यार्थं निर्गतः चितोडदुर्गमागत्य निःशेषीकृतक्षात्रियं अग्निसात्कृतक्षत्रियरमणीगणं तदवलोक्य खिन्नः प्रतिज्ञानुरूपं चितोडविजयानन्दमग्नं तं गुर्जराधिपं पराजयत.

एवं ते रजपूतक्षात्रिया यदा कुंकुमवस्त्राणि धृत्वा युद्धार्थं निरगच्छन् तदा ते कालकिंकरेभ्योऽपि भयंकरा आभासन्त. यतो यदा शत्रुविजयाकांक्षा निष्फला तदैव ते सर्वेऽपि मिलित्वा स्वकलत्रादिकं वन्हिसात् कुर्वाणाः तथा वस्त्राणि धारयामासुः एवं बहवः प्रसंगा राजस्थानस्येतिहासे सन्ति.

पाठकाः ! एवं बहुलश्रेष्ठगुणसम्पन्नेष्वपि तेषु केचन दोषा आसन्. तेषु प्राधान्येन शीघ्रकोपित्वं तथा स्वल्पस्याप्यपमानस्यासहनं च.

पुरा रायमल्लनामा मेवाडनराधीश आसीत्. तस्य संग्रामसिंह,

पृथ्वीराज, जयमल्लाख्याः त्रयः पुत्रा आसन्. ते चैकदा मृगयातो निवृत्ता भुक्त्वा चन्दनमेकशीतलायां चन्द्रशालायामुपविष्टाः किमपि किमपि समलपन्. अत्रान्तरे पितुःपश्चात् अस्य राज्यस्य को वा स्वामी भविष्यतीति प्रश्नः प्रचलितः. तदानीमेव ते त्रयोऽपि बन्धव उत्थाय ' भगवतीमेव पृच्छामः ' इति निश्चित्य भगवतीदेवालयमागच्छन्. तत्र पृथ्वीराजजयमल्लौ प्रथमं देवालयं प्रविश्य भूमावेव समुपविष्टौ. संग्रामसिंहस्तु पश्चादागतो विस्तीर्णे व्याघ्राम्बरे समुपविवेश. अथ उपासिका च ज्ञातभगवतीहृदया ' व्याघ्रांबरस्थः पुरुष एवास्य मेवाडाधिपतेः पश्चात्स्वामी भविष्यति ' इति जगाद. तदानीमेव महामानी पृथ्वीराजोऽसिलतां निष्कोषीकृत्य ' अहमिमामुपासिकामेव मिथ्यावादिनीं करोमि ' इति वदन् संग्रामसिंहं प्रहर्तुमधावत. स तु यथाकथंचित् विहितात्मरक्षणो महता प्रयत्नेन पलाय्यात्मानमरक्षत्. जीवति पृथ्वीराजे स चितोडदुर्गं नाजगाम. स्वर्गं गते पृथ्वीराजे पश्चादागत्य चितोडसिंहासनमलंचक्रे.

एवमेवैकदा चितोडनराधीशो मोकलनामाऽऽसीत्. तस्य पितामहस्य दासीपुत्रौ चचामेरासंज्ञकावास्ताम्. स चैकदा ताभ्यां मंत्रिमंडलेन च सममुपवनमधिवसानः सलीलमपृच्छत् कोऽयं वृक्ष इति. वयमनभिज्ञा अस्मिन् विषय इति मंत्रिभिरुक्ते स द्वावपि स्वपितामहस्य दासीपत्रौ पितृव्यस्वरूपौ पप्रच्छ. तौ तु तक्षककुलसंभूतत्वमस्मन्मातुर्मनसि कृत्वा राज्ञेत्थं पृष्टमिति मन्यमानौ सकोपमुत्थाय स्वावासं जग्मतुः. द्वितीयदिने तस्मिन् राजनि देवालये देवपूजां कुर्वति सति तौ समागत्य शिरश्छेदमकुरुताम्. एवं बहवः प्रसंगा राजस्थाने प्रतिदिनमजा-

यन्त तेन तत्रवसतां जनानां चेतांसि निर्विकाराण्येवासन. यथाहि राजस्थानवर्तिन क्षत्रियाः शौर्यौदार्यादिगुणशालिनः तथैव तद्रमण्योऽपि. किंबहुना—रजपूतक्षत्रियरमणीनां समा रमण्य इह जगतीतले क्वापि न सन्तीति निर्विवादम्. वयं च राजस्थानरमणीगुणान् सविस्तरमग्रे वर्णयिष्यामः.

---

( ५ )

वाचकाः ! राजस्थानवासिनां क्षत्रियाणां स्वभावः संक्षेपेण प्रदर्शितः. अधुना तत्प्रतिपक्षीभूतानां यवनानां स्वभावपरिचयं कारयामि.

एते च व्यवहारमिषेण अस्यां भारतभुवि बहोः कालात् पर्याटन्. ते च स्वदेशं नानाविपद्भिः परिपूर्णमवलोक्यास्यां मृत्युलोकस्वर्गायमाणायां भारतभुवि स्थातुमैच्छन्. स्थिताश्च जेतुमपि. यदा खलु इमे यवना इमां भारतभुवं जेतुं प्रायतन्त तदा प्रायः सर्वएव क्षत्रियराजाः सर्वत्र व्यराजन्. तांश्च येन केनापि मिषेण जित्वा यवनैरियं भूरात्मसात्कृतेति सर्वेऽपीतिहासकारा वदन्ति. तस्मात् यथा क्षत्रियराजानां स्वभावो मया निवेदितस्तथैव यवनानामपि स्वभावो वर्णनीय एव.

वाचकाः ! ये खलु रजपुतक्षत्रियेषु शौर्यौदार्यप्रभृतयो गुणा मया वर्णितास्तेषां यवनेष्वभाव एवासीत्. अस्मिन् विषयेऽहं कानिचिदुदाहरणानि प्रदर्शयामि. तत्र कृतघ्नतायाम्—

यो हि प्रथमो दिल्लीश्वरस्य पृथ्वीराजस्य जेता गिझनीपतिः शहाबुद्धीननामा यवनाधिपः स सप्तकृत्वस्तेन दिल्लीश्वरेण पराजित्य बन्दीकृतः सविनयं विज्ञप्तेन तेन परमौदार्यखनिना मुक्तः.

परन्तु यदा च दुर्दैवतः पृथ्वीराजो युद्धे पराजितस्तदा स तं न मुमोच. प्रत्युत समुद्धृत्याक्षिणी तं कारागृहे स्थापयामास.

परकान्तासंसर्गपराङ्मुखाः खलु रजपूतक्षत्रिया इति सार्वजनीनम्. तत्र यवनास्तु अत्यन्तं विरुद्धाः.

अल्लाउद्दीनखिलजीनामा यवनो दिल्लीनगरं विजित्य तदधिपो बभूव. स च यदा गुर्जराधिपं पराजिग्ये तदा तदीयां पत्नीं कमलदेवीं दिवंगते पितरि निभृतमितस्ततः संचरन्तो केनापि यवनेन बन्दीकृता दिल्लीनगरं प्रेषिता च. तत्र च निवसन्ती सा प्रथमं तस्य दिल्लीश्वरस्य पुत्रेण परिणीता. अथ परलोकं गते अल्लाउद्दीने तस्य द्वितीयः पुत्रः स्वज्येष्ठबन्धुं हत्वा तामात्मपत्नीमकरोत्. ततः सोऽपि केनापि प्रबलेन सामन्तेन निहतः. स च सामान्तस्तामात्मपत्न्यधत्त. तस्मिन्नपि गियासउद्दीननाम्ना केनापि यवनेन निहते स एव यवनस्तामात्मभार्यां व्यधात्.

महामान्यः चितोडनगराधीशो राजसिंहो नामासीत्. स चैकदा परमक्रूरेण 'अवरंगजेब' नाम्ना दिल्लीश्वरेण समं युयुधे. सोऽकस्मादरवल्लीपर्वतदरीमध्ये तं ससैन्यं प्रतिबबन्ध. तस्मिन् सेनासमूहे दिल्लीश्वरस्य पत्नी 'उदेपुरी' नामासीत्-साऽपि राजसिंहसामन्तैर्बन्दीकृत्यानीता तेन धर्मशीलेन राज्ञा भगिनिवादृत्य पत्युरन्तिकं प्रेषिता.

बान्धवाः ! परकलत्राणि मातृवत् मन्यमानानां क्षत्रियाणां तथा परकलत्राभिमर्शेन धन्यंमन्यानां यवनानां मध्ये कियदन्तरमिति यूयमेव पश्यत.

तथैव वचनभंगोऽपि.

यदा अल्लाउद्दीनखिलजीनामा यवनो दिल्लीश्वरोऽभवत्तदा चितोडदुर्गे लक्ष्मणसिंहो नाम राजा राज्यमकरोत्. तस्य पितृव्यो भीमदेवो नामासीत्. तस्य पत्नीं सतीं पद्मिनीं परमलावण्यसम्पन्नां निशम्य तां कामयमानः स दिल्लीश्वरस्तेन लक्ष्मणसिंहेन समं घोरं युद्धं व्यतानीत्. परन्तु अलब्धजयस्तस्याः प्रतिबिंबं द्रष्टुं प्रार्थयामास स्वीकृतायां चास्यामभ्यार्थनायां जातसंधिमैत्र्या चितोडदुर्गं प्रविश्य प्रतिबिंबं वीक्ष्य स्वावासं निवर्तमानः स्नेहादनुगच्छन्तं तं भीमसिंहमेव प्रतिबन्धे न्यधात्.

श्रीमतः शहाजहाननाम्नः अकबरपौत्रस्य दिल्लीश्वरस्य चत्वारः पुत्रा आसन्. तेषु अवरंगजेबो नाम कनीयान्. अयं च कपटमतिर्धूर्तशिरोमणिस्तेषु त्रिष्वपि बन्धुषु राज्यार्थं कलहायमानेषु प्रथमं वैराग्यं दर्शयित्वा सशपथं मुरादनाम्ना तृतीयेन बन्धुना सहामीलत्. ततश्च क्रमेण ज्येष्ठबन्धुं चाण्डालहस्तेन, मध्यमं वनवासेन अवधीत्. तृतीयं च मुरादं सर्पदंशैर्जघान. स तु संजातोपतापो मुरादो मरणसमये तं अवरंगजेबं जगाद—— एतदर्थमेव त्वया सहशस्त्रः शपथः कृत इति. किंबहुना यो हि अस्य अवरंगजेबस्य समग्रं चरितं पठेत् स यवनानां स्वभावं सम्यगवधारयेत्. प्रसिद्धो मोगलकुलदीपो दिल्लीश्वरो अकबरो नामाभवत्. तस्य समीपे मानसिंहो नाम परमचतुरः शौर्यनिधिः सेनापतिरासीत्. यश्च रात्रिंदिवं प्रयतमानो यवनराज्यसीमां वर्धयामास. स एव कुतश्चित्कारणात्तेनैव अकबरेण विषमयैर्लड्डुकैर्निभृतं जिघांसितः परन्तु महता सुकृतेन सेवकभ्रान्त्या विषमयान् लड्डुकान् स एवासेवत तेन तस्मिन्नेव क्षणे स पंचत्वमगात्.

पाठकाः ? ये खलु मया भारतवासिनां क्षत्रियराजानां गुणाः प्रदर्शितास्ते यवनैः समं प्रसंगे दोषतां प्राप्ताः. परमधार्मिका भारतवासिनः सदा मित्रेष्विव शत्रुष्वपि धर्माचरणमेव श्रेयस्कर मन्यन्ते न तथाऽन्ये. भारतवर्षस्य यत् पारतंत्र्यं तदत्रैव बद्ध-मूलमिति भवन्तो विदांकुर्वन्तु. अतएव केनापि राजनीतिकारेण ' व्रजन्ति ते मूढधियः पराभवं, भवन्ति मायाविषु ये न मायिन ' इति प्रतिपादितम्. तद्यथारुचि गृह्यतां वा त्यज्यतां वेत्यन्यदेतत्. प्रकृतमनुसरामः.



# २ मेवाडवर्णनम्.

१ मेवाडस्वरूपपरिचयः

२ महंमदीयानामाक्रमणानि.

३ चितोडदुर्गं रजपूतक्षत्रियरमण्यश्च.

( १ )




स्मिन् अस्मिन् सकलभूतलविख्याते राजस्थाने अतिनिबिडारण्यानीव्याप्तः, अतिविस्तीर्णमधुरजलपरिपूर्णजलाशयमंडितः, खड्गादिशस्त्ररचनाकुशलशिल्पिकः, चितोड कुमळनेरप्रभृतिभिर्महादुर्गैः संकुलः, अनेकैः सुवर्णशिखरमण्डितैः अतिसुंदरमूर्तिभूषितैर्देवानामालयैः संपादितसौंदर्यः, बहुभिः साक्षात् धर्मावतारैरिव सनातनधर्मानुयायिभिः क्षत्रियभूपालैः कृतरक्षः, पातिव्रत्यपालनदक्षभारतललनाललामभूतललनः, भूमिगतः स्वर्गइव, शौर्यौदार्यादि सद्गुणानां खनिरिव, विख्यातः, मेवाडनामा महान् प्रदेशः अस्ति.

यत्र चाधुनाऽपि क्रूराकृतयः शरासनमण्डितदण्डाः, बाणपरिपूर्णतूणीरमांसलस्कन्धाः, तीक्ष्णदृष्टयः, वस्त्रखंडेन यथाकथंचिदाच्छादितगुप्तभागाः स्वामिभक्ताः शूरश्रेष्ठाः भीलेत्या

वनेचरा विराजन्ते. निर्विघ्नसंचरणात् परिपुष्टा दुग्धधवला गोश्रेणयः सुतरां यं भूषयन्ति.

यस्मिंश्च मथुरानिवासिभिर्महातपस्विभिर्बहुशः कृतसमग्रपृथ्वीपर्यटनैर्महाभगवद्भक्तैर्वल्लभाचार्यैः कृतसंस्थापनं समस्तभारतवर्षवासिनां सनातनधर्मानुयायिनां मान्यं आचार्यमहाप्रभुश्रीवल्लभाचार्यवंशजैः संसेवितं मनोहरं श्रीनाथस्य गोवर्धनधारिणो देवालयं विद्यते. एवमेव त्रिकुटाचलोपत्यकायां नागेन्द्रनामकं नगरमासीत्, तत्रस्थमेकलिंगेश्वरनामकमहादेवदेवालयमपि विद्यते. वाचकाः! अनयोर्देवालययोराख्यायिकाऽपि परमविस्मयकारिण्यस्ति.

पुरा खलु भगवतः श्रीनाथस्य मूर्तिर्यवनपीडाभयात्पूजकैः श्रीगोवर्धनपर्वते निखातनिक्षिप्ताऽऽसीत्. अथ तत्रैव तपस्यतां श्रीवल्लभाचार्याणां मनसि साक्षात्कारः 'अहमस्मि अत्र, मामितो निष्कास्य पूजय' इति बभूव. तं भगवतो निदेशं स्वीकृत्य यावत्ते गोवर्धनपर्वतं गत्वा तत्र तां श्रीनाथमूर्तिमपश्यन्, तावदेका कपिला गौस्तत्रैव समागता अमृततुल्याभिर्दुग्धधाराभिस्तामभिषिषेच. ततस्तां मूर्तिं महतोत्सवेन मथुरानगरं नीत्वा ते श्रीमदाचार्याः प्रतिष्ठापयामासुः.

अथ प्रवृत्ते भगवतः श्रीनाथस्य महोत्सवे पुनरपि दिल्लीश्वरादयो यवनास्तमसहमानास्तामेव मूर्तिं विनाशयितुमैच्छन्. राजपूतक्षत्रियाश्च श्रीनाथमूर्तिरक्षणार्थं रात्रिंदिवं प्रायतन्त. ततश्च मथुरानगरे श्रीनाथमूर्ते रक्षणमशक्यं मन्यमानास्ते क्षत्रियश्रेष्ठास्तान् वल्लभाचार्य वंशजान् राजस्थाननिवासार्थं व्यज्ञापयन्. तेऽपि तां विज्ञापनामंगीकृत्य चितोडदुर्गस्य समीपे पर्वतशिखरवेष्टिते

स्थाने श्रीनाथस्य देवालयं विधाय तत्रैव न्यवसन्. वाचकाः !
अधुनाऽपि भगवान् श्रीनाथः सकलभक्तमनोरथान्पूरयन् तत्रैव
विराजते.

पुरा खलु अस्मिन् गेहलोटवंशे बाप्पारावळनामाऽतिप्रसिद्धः शूरो नृपतिरभवत्. स तु बाल्ये वडनगरवासिना ब्राह्मणेन विहितरक्षः पाराशरारण्येऽवसत्. स बाल्ये प्रतिदिनं परमपूज्येन एकलिंगमहादेवपूजकेन विप्रेण कृतोपदेशो नियमेन एकलिंगमहादेवपूजयत्. तत एव स बाप्पारावळः सार्वभौमो बभूव. अधुनाऽपि सर्वेप्युदयपुराधीशास्तस्य महादेवस्यात्मानं सेवकान् मन्यमाना भक्त्या सेवन्ते.

---

( २ )

महंमदीयधर्मस्याद्यः संस्थापको महंमदपैगंबरनामा साधुवरोऽभूत्. स च तैग्रीसनाम्न्या नद्यास्तीरे बसोरानामकं नगरमवासयत्. तेन मार्गेण कतिपये महंमदीया वाणिज्यार्थमत्राययुः. ततः क्रमेण वर्धमानबलास्ते प्रथमतः सिंधुनदमवतीर्य तत्रस्थं क्षत्रियराजमजयन्. अथ महंमदनाम्ना यवनेन सामन्तेन कन्नोजनगरमाक्रान्तं. ततश्च महंमदगिझनवीनामा साहसिको यवनः सप्तदशकृत्वः इमां भारतभुवं निर्लुण्ठ्यासंख्यान् जनान् हत्वाऽगणितां सम्पदं स्वदेशं निनाय.

वाचकाः ! एतेषां बुभुक्षितानां यवनानां वृकाणामिवाक्रमणैरयं देशो जर्जरितो बभूव. मदोन्मत्तगजचंक्रमणैश्चूर्णीकृतं नन्दनवनमिवेदं भारतवर्षं न दृष्टिपथमानन्दयत्. क्रूरैर्यवनैर्भूमिसात्कृतदेवालयं दासीकृतार्यमहिलं लुण्ठितसंपत्तिकं निहतस्वजन-

शोकमग्ननागरिकं केवलं दुःखदं स्मशानमिवाऽभवत्. एवं निर्लुण्ठ्याऽपि अतृप्तास्ते महंमदीया अत्रैव स्थातुमिच्छन्तः क्रमेण भारतं जेतुमारभन्त. प्रथमतः पंजाबदेशाधिपं भाटीवंशभूषणं नृपं निहत्य तं सर्वं प्रदेशमात्मसाच्चक्रुः. ततो महता वेगेनाऽऽर्यावर्तं प्रविष्टास्ते यवना अजमीरनगराधिपं माणिकरायं जघ्नुः. तदानीं तु ताननतिवेगेन सर्वत्र विजयमानान्निरीक्ष्य विस्मिताः सर्वेऽपि क्षत्रियाः किंकर्तव्यतामूढा एवाजायन्त. सर्वेऽपि भारतवासिनो अज्ञातयवनवृत्तान्तास्तान् म्लेच्छानसुरानवदन्.

तस्मिन् समये मेवाडदेशे बाप्पारावळनामा परमशूरो नृपतिरासीत्. स तु महता वेगेनागच्छतस्तान् यवनान् प्रतिरुरोध, पराजयत च. बाप्पारावळो न केवलं यवनान् पराजयत किंतु पराजितान् पलायमानाननुधावंस्तेषां जन्मभूमिं प्रविश्य गिझनीनगराधिपं जित्वा तमात्मसामंतं चक्रे. अथ पुण्यश्लोकस्य बाप्पारावळस्य पुत्रे खुमाननाम्नि मेवाडदेशं परिपालयति सति पुनरपि सर्वे यवना मिलित्वा मेवाडदेशं जेतुं प्रायतन्त. तदानीमपि सर्वे क्षत्रियराजा मिलित्वा तान् यवनान् कांदिशीकांश्चक्रुः. खुमानराजमारभ्य पंचदश राजानो मेवाडसिंहासनमलमकुर्वन्. अरक्षंश्च मेवाडमेदिनीं.

अथ पंचदशः समरसिंहो नाम मेवाडाधिपतिरभूत्. तस्मिन्समये गुर्जरदेशे भोळाभीमदेवः, अर्बुदुर्गे परमारजैतः, मंदोडनगरे नाहरराय इत्यादयः सर्वेऽपि बहवः क्षत्रियराजा राज्यमकुर्वन्. अयं समरसिंहः सुप्रसिद्धस्य पृथ्वीराजस्य भगिनीं पृथां पर्यणयत्. चव्हाणवंशतिलके प्रसिद्धे पृथ्वीराजे शहाबुद्दीनघोरीनाम्ना यवनाधीशेन पराजिते सति समरसिंहः समं कल्याणरायनाम्ना

स्वपुत्रेण समरभूमावशेत. वाचकाः ! अस्मिन्नेव समये पवित्रा मेवाडमेदिन्यपि महंमदीयवश्याऽभूत्. परन्तु समरसिंहस्य पत्नी पट्टणाधिशिकन्या कोरमदेवी स्वपुत्रं कर्णसिंहासनाधीश्वरं विधायावशिष्टैः सामन्तैर्यवनान् पराभूतांश्चक्रे. ते च ततो निवृत्ता अपि दिल्लीनगरं राजधानीं विधाय कृत्स्नमार्यावर्तमात्मसात्कृत्वा प्रवर्धमाना अन्यानपि भारतवर्षविभागानात्मसात्कर्तुं प्रायतन्त. ततश्च क्रमेण मेवाडाधीशाः स्वतंत्रा एव यथाशक्ति सनातनधर्मक्षेत्राणि रक्षयितुं प्रयेतिरे. सुप्रसिद्धे गयाक्षेत्रे महंमदीयैः समाक्रान्ते तन्मोचनाय सहस्रशो वीराः समं चितोडाधीशे राजस्थान्निर्गत्यासंख्यान् यवनान् हत्वा तानि क्षेत्राणि रक्षयामासुः.

---

## ( ३ )

तस्मिन् अस्मिन् मेवाडप्रदेशे अतिविस्तीर्णशिरोभागस्य पर्वतस्य शिखरे वर्तमानं. अतिनिबिडवृक्षावलीमण्डितेन दृढतरपाषाणविरचितेन अत्युन्नतेन निर्भीकराजस्थानवासिक्षत्रियगणसमूहेनेव प्राकारवलयेन वेष्टितं, चतसृषु दिशासु क्लृप्तमहाद्वारं, अतिसुन्दरैर्मधुरजलैस्तडागैर्व्याप्तं, अनेकधान्यप्ररोहसमर्थक्षेत्रसमुदायालंकृतं, विविधशिल्पिकलाचातुर्यप्रदर्शकैः सनातनधर्मानुरागिविरचितैर्देवालयैर्भूषितं, सैनिकगणनिवासभवनैः अखण्डधान्यैर्धान्यागारैः कुबेरभवनैरिव कोशागारैः इन्द्रसभागर्वहारिभिर्विशाले राजप्रासादैः संजातलक्ष्मीकं, मेवाडलक्ष्म्या मातृगृहमिव, स्वातंत्र्यदेव्या निवासभवनमिव, शौर्यस्योत्पत्तिस्थानमिव, सनातनधर्मस्य हृदयमिव, औदार्यस्य निदानमिव, आर्यभूमेर्मुकुट-

मिव, शरणागतानामभयस्थानमिव, शत्रूणां दुर्जयं चितोडना-मकं महादुर्गम्.

वाचकाः! सन्ति नामास्मिन् भारतवर्षे महान्ति दुर्गाणि, तथापि चितोडदुर्गस्य माहात्म्यं न कस्यापि. भारतवर्षस्येतिहासे चितोडदुर्गं प्राधान्येन विलसेत्. राजस्थानेतिहासस्तु बाहुल्येन चितोडदुर्गेतिहासेनैव पूर्णः. सज्जनाः! यस्मिन् चितोडदुर्गे स्व-शीलरक्षणार्थं रजपूतरमणीभिः त्रिर्वह्निः समाश्रितः सोऽपि पर-मानन्देन, अधुना दृष्टं तच्चितोडदुर्गं तांस्तान् प्रसंगान् स्मारयति. निवेदयति च भारतललनानां पतिनिष्ठां धर्मशीलतां लोकोत्तर धैर्यतां. ये ये खलु महंमदीया दिल्लीश्वरा अभवन् प्रायस्ते सर्व एव चितोडदुर्गं विजित्य मेवाडमेदिनीमात्मसात् कर्तुं प्रायतन्तैव. विजयमदोन्मत्तास्ते दुःखदायिनः प्रसंगान् समापादयन्. पाठकाः! केवलं स्वरूपदर्शनार्थं कांश्चित् कथाभागानहं ग्रश्नामि. येन यूयं रजपूतरमणीनां शीलं सम्यग्ज्ञास्यथ. यदा मेवाडाधिपतिर्लक्ष्म णसिंहश्चितोडदुर्गं राज्यमकारोत्तदा दिल्लीश्वरः अल्लाउद्दीन-नामाऽऽसीत्. तस्य लक्ष्मणसिंहस्य पितृव्यो भीमसिंहः सिंहल-द्वीपेशस्य कन्यां लावण्यखनिं भूमिगतां रंभामिव पद्मिनीं परि-णिनाय. अल्लाउद्दीनश्च तस्या लावण्यकीर्तिं निशम्य कामाकुलो ऽधमो लक्ष्मणसिंहं दूतमुखेनाकथयत्. पद्मिनी मह्यं 'समर्पणीया किंवा युद्धं वा स्वीकार्यं' इति. रजपूतक्षत्रियमुकुटमणिर्मेवाडन-रेशो लक्ष्मणसिंह इमं निदेशं निशम्य क्रुद्धस्तस्मिन्नेव क्षणे तं प्रमत्तं यवनाधिपं युद्धार्थमाह्वयत्

अथ प्रवृत्ते युद्धे सर्वैरपि क्षत्रियशिरोमणिभिः पराजितः स कपटी यवनो लक्ष्मणसिंहमवदत्. यद्यपि पद्मिनी मया साक्षा-

द्रष्टुं न शक्या तथापि प्रतिबिंबदर्शने न काऽपि हानिः ? तद्यदि कृपया तत्प्रतिबिंबमपि प्रदर्श्यते तदा तावतैव आत्मानं कृतकृत्यं मन्वानः स्वराजधानीं गमिष्यामि इति. स इमां याचनामपि लोकसंहारदुःखिताया: पद्मिन्या आग्रहादेव स्वीचकार. ततः प्रदर्शितं तत्प्रतिबिंबमवलोक्य दुर्गादवतरन्तं तं अल्लाउद्दीनं भीमसिंहः स्नेहादनुजगाम. तं च स्वस्कांधावारे समागतमवेक्ष्य नीचमतिः स आल्लाउद्दीनस्तमेव बन्दिनं चकार. न्यवेदयच्च दूतमुखेन ' यदि भीमसिंहोऽपेक्ष्यते तदा पद्मिनी दीयतामिति. राजा लक्ष्मणसिंहश्च यवनस्वभावं जानन् स्वपितृव्यमोचने कुण्ठितमतिः किंकर्तव्यतामूढोऽभवत्.

राज्ञी पद्मिनी तु तद्वृत्तं निशम्य मूर्ध्नि वज्रेण ताडितेव शोकाकुला स्वबन्धू समाहूय जगाद ' नाथं विना मम जीवनमशक्यं.' स तु यवनो मदर्थमेव सर्वान् युष्मान् तथा भर्तृचरणानपि पीडयति. तदहमेव गच्छामि. मां च समागतां वीक्ष्य स यवनो नाथं मुंचेत. अहं तु पवित्रं सूर्यवंशमकलंकयन्ती स्वर्गे नाथागमनं प्रतिपालयिष्यामीति. तौ चाकर्ण्य स्वभगिन्या इदं भाषणं राज्ञा लक्ष्मणसिंहेन समं संमंत्र्येत्थं निरणयताम् पद्मिनी तु नैव प्रेषणीया. किंतु पद्मिनी समागच्छतीति मिथ्यैव कथयित्वा स कपटी वंचनीयः, पितृव्यो भीमसिंहश्च मोचनीय इति.

अचिरादेव चितोडदुर्गादवातेरुः सिबिकानां जवनिकापिहितानां सप्तशतानि. विविशुश्च अल्लाउद्दीनस्य स्कन्धावारं. स तु नीचः अल्लाउद्दीनः क्षत्रियैः 'चरमं पद्मिनीदर्शनमनुभवतु वराको भीमसिंह' इति विज्ञप्तस्तथाकर्तुमन्वमोदत. मुक्तो भीमसिंहश्च

शिबिकायां स्थित्वा नातिदूरं गतः प्रजविनमश्वमारुह्य चितोड-दुर्गमाजगाम.

अथ मदीयां पद्मिनीं पश्यन् भीमसिंहः किमिति वेलायत इति उच्चैराक्रोशति अल्लाउद्दीने शिबिकास्थाः सप्तशतसंख्याकाः शूराः क्षत्रिया नग्नखड्गमंडितहस्ता बहिर्निरगच्छन्. अनेकान् यवनान् हत्वा स्वर्गमलंचक्रुः. स तु अल्लाउद्दीनः तेन पराभवेन खिन्नः पुनरपि युद्धमारभत.

ततः क्रमेण स्वस्यैकादशपुत्रान् समरदेवताबलीन् विधाय स्वयं समरांगणं गन्तुकामः स मेवाडाधिपः सर्वानपि कुंकुमवस्त्र-धारणार्थमादिदेश. तांश्च कुंकुमवस्त्रालंकृतान्विलोक्य सर्वाअपि रजपूतरमण्यः पद्मिनीसमेताः स्फोटकद्रव्यपरिपूर्णे महागर्ते सौभा-ग्यालंकारालंकृताः स्वभर्तॄनापृच्छ्योपाविशन्. ततश्च राज्ञा लक्ष्म-णसिंहेन समं सर्वेऽपि ते क्षत्रियश्रेष्ठा नग्नासिलतामण्डितहस्ताः स्वहस्तेन तत्र गर्तेऽग्निं चिक्षिपुः. तस्मिन्नेव क्षणे ताः सर्वाअपि क्षत्रियांगना भारतसंतानमातरो वन्हिस्वरूपं प्रापुः. तेऽपि नर-शार्दूलाः उद्घाट्य दुर्गद्वाराणि शत्रुसेनामाक्रम्य वीरार्हां गतिं. स तु अल्लाउद्दीनो महताऽऽनन्देन चितोडदुर्गं प्रविश्य यावत्प-श्यति तावन्मूर्तं सकलराजस्थानरमणीनां प्रखरं पातिव्रत्या-ग्निमिव विवृद्धं विकरालं वन्हिमपश्यत्. तं द्रष्टुमसमर्थः स नीचः पापी यवनः पद्मिनीं कृतवन्हिप्रवेशामाकर्ण्य दुःखेन भुवि निपत्य बालक इवारोदीत् विललाप च. यस्मिन्विलासमन्दिरे पद्मिनीभीमसिंहौ महताऽऽनन्देन विलासांश्चक्रतुस्तदभिनंद्य तथैव पद्मिनीस्मरणार्थं स्थापयामास.

एवमेव गुर्जरदेशाधिपो बहादुरशहानामको यवन आसीत्.

स तु केनापि कारणेन चितोडनराधीशेन समं बद्धवैरो योद्धुमारभत. विक्रमाजितश्च कथंचिद्विहितप्रतिक्रियोऽपि न लेभे यशः. तदानीं च प्रायः सर्वेऽपि क्षत्रियाश्चितोडदुर्गरक्षणार्थं समागच्छन्. ते च वर्धमानं शत्रोर्बलं वीक्ष्य यशोलाभे निराशाः कुंकुमवस्त्रधारणार्थं सर्वानवदन्. सर्वाअपि रजपूतललनास्तस्मिन्गर्ते स्फोटकद्रव्यपरिपूर्णे समुपविष्टाः स्वपतिहस्तेन निक्षिप्तेनाग्निना लब्धदेहसाफल्याः क्षणात्स्वर्गमलंचक्रुः. तेऽपि शत्रुसैनिकान्यमागारं प्रेषयित्वा.

वाचकाः ? अस्मिन् अग्निप्रवेशे चतुर्दशसहस्त्रेभ्योऽपि अधिकाः क्षत्रियललनाः स्वशीलरक्षणार्थं प्राणानानन्देन विससर्जुरिति किमिदं न लोकोत्तरं ? अन्यदेशेतिहासेषु अदृष्टचरमिदं भारतवर्षस्यैव सौभाग्यम् ! एतादृशो मातरो रजपूतक्षत्रियाणामासन्निति तत्रैव महाराजप्रतापसिंहसदृशानि रत्नान्यजायन्त. अतएव सर्वविश्रुतं राजस्थानमाहात्म्यं. अतएव चितोडदुर्गं सर्ववंद्यं महातीर्थं सकलभारतवासिनामादरास्पदं. प्रियपाठकाः ! यत्र केवलं स्वशीलस्य तथा स्वपातिव्रत्यस्य रक्षणार्थमसंख्याभिर्ललनाभिस्तथा स्वस्वातंत्र्यरक्षणार्थमगणितैर्वीरैः स्वप्राणास्तृणवल्लीलयैव. समुत्सृष्टास्तत्स्थलं यदि न तीर्थं तदा किं तीर्थमिति यूयमेव वदत ? अधुनाऽपि बहवः सनातनधर्मानुयायिनस्तत्स्थलं तद्दुर्गं विलोक्य पावयन्त्यात्मानं. वदन्ति च धन्यो राजस्थानदेशः धन्यमिदं चितोडदुर्गं. धन्याश्च ता भारतललामभूताः प्रातःसंस्मरणीयाः पविताः क्षत्रियांगना इति. अस्तु. प्रकृतमनुसरामः.



# ३ कुलवृत्तम्.

१ गेहलोटवंशवर्णनम्.
२ तत्र प्रसिद्धानां राज्ञां संक्षेपेण वृत्तम्.
३ विक्रमाजितः.
४ बहुपत्नीकत्वम्.

( १ )



वा

चकाः! पुण्यश्लोकस्यास्मच्चरित्रनायकस्य यत्कुलमस्ति तत्सर्वेष्वपि षट्त्रिंशन्मितेषु क्षत्रियकुलेषु प्रथममेवेति सर्वेषामितिहासकाराणां सम्मतं. अतएवेदं कुलं 'आर्यकुलसूर्य' पदेन सर्वैरपि संबोध्यते. अस्तु. अस्य कुलस्येतिवृत्तमित्थं ज्ञायते. भगवतः कौसल्यानन्दनस्य दाशरथे रामचन्द्रस्य कुशलवौ नाम पुत्रावास्ताम्. तत्र कनिष्ठो लवः प्रसिद्धं लाहोरनगरं वासयामास. तत्र च निवसन्तः सर्वेऽपि तद्वंशजा राज्यमकुर्वन्. अवन्तिनाथे विक्रमादित्ये राजनि सति तद्वंशः कनकसेनो नाम राजा सौराष्ट्रदेशमागत्योवास. तत आरभ्यायं वंशः सेननाम्ना व्यपादिश्यत. ततः क्रमेणतद्वंश्या जना नानास्थानेषु पर्यटन्तः क्रमेण ' आदित्य, सूर्यवंश्य, गेहलोटइत्यादीनि नामानि धारयामासुः. गेहलोटनाम धृत्वा ते उदयपुरस्य नातिदूरे पर्वतदरीषु न्यवसन्. ततएव ते ' आहार्य ' नाम्नाऽपि बहुकाले व्यप-

दिष्टाः. एकदा कश्चन महाप्रतापी एतत्कुलिनो राजा मृगयार्थं गतः केवलं तद्दिने शशमेवालभत तेन स परिहासेन ' सिसो-दिया ' नाम्ना व्यपदिष्टस्तामेवाख्यामलभत. अन्येत्वेवं वदन्ति-कश्चिदेतत्कुलसंभूतो भूपः परमधार्मिकः सेवकस्खलनेन सुरां पपौ, तेन चात्मानं महापापिनं मन्यमानः स सीसकरसं निपीय स्वदेहं जहौ. तत आरभ्यास्य कुलस्य नाम ' सिसोदिया ' संवृत्तमिति.

प्रियपाठकाः ! यथा हि कुलस्य नामपरिवृत्तिस्तथैव विरुद्ध-स्यापि. प्रथमं सर्वेऽपि एतत्कुलसंभूता राजान आत्मानं रावळ-पदेनाभूषयन्. परन्तु खिस्तीये त्रयोदशशतके परिहारकुलसंभवा-न्नृपान् विजित्य चितोडनगराधीशो मन्दोरराज्यमात्मसादकरोत्. तत आरभ्य ' राणा ' इत्युपनाम प्रचलति. यदा खलु कनकसेनो गुर्जरदेशमागत्य प्रमारराज्यमाक्रम्य तत्रैव न्यवसत्तदा तद्वं-श्यैर्नाना नगराणि वासितानि तेषु वल्लभीपुरं नाम नगरं मुख्य मासीत्. तत्र कनकसेनवंश्यः शिलादित्यो नाम राजा प्रबलै-र्यवनैः समं युद्धमानः सपरिवारं रणे निहतः. तदानीं तस्य भार्या पुष्पवती अर्बुदपर्वतोपत्यकायां विद्यमानं भगवतीमंदिर मगात्. सा च तत्रैव निवसन्ती सर्वं स्वकुलक्षयवृत्तमशृणोत्. दुःखाकुलाऽपि सा कठोरगर्भतया तस्मिन्नेव शैले निभृतं वसन्ती पूर्णेषु मासेषु सुलक्षणं पुत्रं सुषुवे. तं च पुत्रं विप्रसात्कृत्य स्वयं दिवंगतस्य स्वपतेर्मार्गं स्वीचक्रे. स च बालकस्तेन विप्रेण सम्यक् पालितो वर्धितः शिक्षितश्च. शैलसंभूततया तस्य नामा ऽपि ' गुह ' इत्येव स चकार. स च बालकः क्रमेण वर्धमानः क्षत्रियगुणानेव बभार. अचिरादेव तं तत्रस्थाः सर्वेऽपि वनेचराः

स्वामिनमकुर्वन्. तत एव तद्वंशजा ' गेहलोट ' इति नाम धारयामासुः.

( २ )

तस्मिन् पवित्रे कुले संभूताः षट् राजानः सम्यग्राज्यमकुर्वन्. सप्तमे ग्रहादित्ये राजनि सति सर्वे वनेचरा मिलित्वा तं ग्रहादित्यमघ्नन्. तस्य ग्रहादित्यस्य त्रिवर्षो ' बाप्पारावळ ' नामा कश्चन पुत्र आसीत्. तं च वडनगरवासी कोऽपि विप्रो ऽपालयत्. ततोऽपि भंडेरीनगरे कोऽपि तज्जातीय आसीत्स तं पालयामास. अथ बाल्ये स बाप्पारावळः समवयोभिर्बालैः सममक्रीडत् तेषु बालेषु ' नागडाधीपस्य सोळंखीकुलभूषणस्य कन्याऽऽसीत्. तां वधूं कल्पयित्वा सर्वेऽपि बालास्तस्य बाप्पारावळस्य विवाहं चक्रुः. अनभिज्ञश्चास्मिन्विषये तस्याः कन्यायाः पिता ज्योतिर्विदमाहूय स्वकन्याहस्तं दर्शयामास. स च ज्योतिर्वित्तां जातविवाहामकथयत्. विस्मितश्च स नागडाधिपः सत्यं वृत्तं जानाति स्म. सोऽपि तत्सत्यं मन्वानस्तस्मै बाप्पारावळाय स्वकन्यां ददौ.

अथ शीघ्रमेव बाप्पारावळश्च चितोडाधिपस्य सेनायां सैनिकोऽभवत्. शीघ्रमेव स्वस्वामिनः प्रेमास्पदं. सर्वेऽपि एकलिंगमहादेवस्य पूजकास्तं भाग्यशालिनं भाग्योदयाय परमेश्वरभक्तिमुपदिदिशुः. एकदा बलवता शत्रुणा चितोडदुर्गं निरुद्धं. तदा तदधिपः सर्वानपि सामन्तानाहूय युद्धार्थं विचारयामास. ते च बाप्पारावळे चितोडाधिपस्य परमप्रीतिमलोक्य असूयान्विता स्तमेव युद्धार्थं प्रेषयितुं राजानमवोचन्. राज्ञापि तथेत्युक्त्वा

योद्धुं समज्ञप्तः ससैन्यं निर्गत्य तं शत्रुं विद्राव्य प्रतापी बाप्पारावळो गिझनीपर्यंतं सर्वमपि भूविभागमजयत्. ततः स तत्स्वामी प्रतिनिवृत्ताय प्रतापिने बलाढ्याय स्वराज्यं वितीर्य देहसाफल्यं विधातुं वनं ययौ. बाप्पारावळोऽपि यथाशास्त्रं प्रजाः पालयन् दुर्लभं यशो लेभे.

वाचकाः ! इत्थमयं पवित्रो वंशो बाप्पारावळेन चितोडदुर्गे स्थापितोऽधुनाऽपि तत्रैव विराजते. अस्य वंशस्य प्रतिष्ठा चितोडदुर्गे ख्रिस्तीये सप्तमशतकेऽभूदिति प्राचीना इतिहासविदो वदन्ति. अस्मिन्कुले बाप्पारावळो महान्प्रतापशाली बभूव.

( २ ) द्वितीयश्च महाराणा लक्ष्मणसिंहो महाप्रतापी सनातनधर्माभिमानी अभूत्. अस्मिन्राजनि मेवाडं परिपालयति सति अल्लाउद्दीनो नाम यवनो दिल्लीपतिस्तस्य लक्ष्मणसिंहस्य पितृव्यपत्नीं पद्मिनीं कामयमानो घोरं युद्धं व्यतानीत्. प्रथमं पराभूतोऽपि पुनरपि सावेशं युयुधे. लक्ष्मणसिंहश्च यवनाय पद्मिनीं वितीर्य स्वकुलं कलंकयितुमनिच्छन्समरवडवानले स्वस्यैकादश पुत्रान् जुहाव. तथापि अतृप्तायै रणदेवतायै आत्मानं बलिं विधातुमनाः सर्वाअपि क्षत्रियरमणीरग्निसात्कृत्य स्वयमपि समरभूमावशेत.

( ३ ) तृतीयश्च महाराणाहम्मीरसिंहः—

यदा खलु लक्ष्मणसिंह समरभूमिं प्रति जगाम तदा सोऽजयसिंहमत्यवाहयत्. अशाच्च तं—त्वं यदा वृद्धो भविष्यसि तदा तव ज्येष्ठस्य भ्रातुः पुत्रं हम्मीरसिंहं सिंहासनाधीश्वरं कुरु इति. अस्य हम्मीरसिंहस्य जन्मवृत्तमपि आश्चर्यमयमस्ति. तद्यथा—हम्मीरसिंहस्य पिता उरुसिंह एकदा मृगयार्थं वनं गतो

महान्तं वनसूकरमनुदधाव. स च सूकरो भीतो महता वेगेन धावमानो महत्क्षेत्रं प्रविवेश. उरुसिंहश्च तत्र गन्तुमसमर्थो बहिरेवातिष्ठत्. अत्रान्तरे काचन रजपूतक्षत्रियकन्यका दण्डेन तं ताडयन्ती क्षेत्राद्बहिर्निरकासयत्. राजाच तं सूकरं हत्वा तां वीक्ष्य विस्मितः समं सर्वैर्मित्रैस्तस्मिन्नेव स्थले मिश्रामार्थमवातरत्. अत्रान्तरेऽतिवेगेन क्षिप्तः पाषाण उरुसिंहस्याश्वं पादरुग्ण मकरोत्. तेन संभ्रान्ताः सर्वे ते पाषाणक्षेपकमन्वैषयन्. उपलेभिरे च तामेव कन्यकां क्षेत्ररक्षणाय पक्षिषु पाषाणान्निक्षिपन्ती. राजा च तां कन्यकां परिणिनाय. तस्या एव कन्यकाया अयं शूरः पुत्रो हम्मीरसिंहः.

स तु अल्लाउद्दीनेन जिते चितोडदुर्गे बाल्ये मातृगृह एवावर्धत. सम्प्राप्ततारुण्यो वनेचराणामग्रेसरो भूत्वा अल्लाउद्दीननियुक्तान्मालवदेवात्स्वचितोडदुर्गं युक्त्याऽऽत्मसाच्चक्रे. खिन्नेन मालवदेवेन विज्ञापितो दिल्लीश्वरो महंमदखिलजीनामा स्वयमागत्य युयुधे. परन्तु अनेन हम्मीरेण पराजितो बन्दी बभूव. बहुलं द्रव्यं वितीर्यात्मानममोचयच्च.

( ४ ) महाराणाकुंभोऽपि अतिपराक्रमी राजनीतिधुरंधरोऽभूत्.

अयं च यदा मेवाडमेदिनीपतिरभूत्तदा गुर्जरमालवदेशयोर्नियुक्तौ दिल्लीपतेरधिकारिणौ प्रबलावास्ताम्. तौ च मिलित्वा मेवाडदेशमाक्रन्तुमाययतुः. महाराणाकुंभोऽपि स्वसैन्येन समं मेवाडसीमामागच्छत्. प्रवृत्ते युद्धे स शूरो मेवाडधिपतिस्तां यवनसेनां वातस्तूलसंघमिवाधुनोत्. विधूय च सेनां तं मालवाधिकारिणं बन्दिनं चक्रे. कतिपयदिवसानंतरं तममुंचत्.

अयं च कुशाग्रबुद्धिर्भूपालो मेवाडमेदिन्या रक्षणार्थं द्वात्रिंशद्दुर्गाणि नूतनानि व्यरचयत्. प्राचीनानि दुर्गाणि च सम्यक् संस्कृतान्यकरोत्. यथा चायं राजनीतिनिपुणस्तथैव धर्मरक्षणेऽपि. स्वोपास्यदेवतानां बहूनि मन्दिराणि राजस्थाने विरचयामास. अस्यैव पत्नी परमभगवद्भक्तिशालिनी मीराबाईनाम साध्वी. सा च रात्रिंदिवं कृष्णभक्तौ लीना न किमपि संसारवृत्तं मनसि चक्रे.

( ९ ) महाराणासंग्रामसिंहः अयं महापराक्रम आसीत्. स च बाल्ये स्वबन्धुना पृथ्वीराजेन समं कलहायमानोऽन्यत्रातिष्ठत्. तस्मिंश्च दिवंगते प्रत्यागत्य मेवाडसिंहासनमलंचक्रे. स च तदानीतनं बलिष्ठं इब्राहीमखानलोदीनामानं यवनं दिल्लीश्वरं पराजित्य तदीयं पुत्रं बन्दीकृत्य चितोडनगरमानिनाय. अन्यांश्च बहून्देशान्विजित्य मेवाडदेशसीमां वर्धयामास. एतदवधिका ये खलु क्षत्रियराजा अस्मिन्भारतवर्षेऽजायन्त ते च यथाशक्ति यवनाधिपैः समं युध्यमानाः कथमपि स्वस्वातंत्र्यमरक्षन्. परन्तु संग्रामसिंहस्य समये बाबरनामा यो यवनो दिल्लीश्वरोऽभूत् स सर्वाण्यपि क्षत्रियराज्यानि क्रमेण विनाशयन्क्षीणबलानि चक्रे. अस्तु. स च राज्ञा संग्रामसिंहेन योद्धुं प्रचलितः क्रमेण स्थाने स्थाने पराजितोऽपि अविगलितधैर्यस्तं शूरं संग्रामसिंहं पराजयत. तदानीं च बहवः सामन्ता उपजापिताः संग्रामसिंहं विहाय बाबरपक्षपातिनोऽभवन्. अस्तु.

## ( ३ )

अथ दिवंगते महाराजसंग्रामसिंहे तदीयः शूरो ज्येष्ठपुत्रो रत्नसिंहो मेवाडसिंहासनमध्युवास परन्तु सोऽचिरादेव परलोकमगात्. ततश्च तस्य कनीयान्बन्धुर्विक्रमाजितो नाम मेवाडमेदिनीपतिरभवत्. अयमेवचायोग्यो भूपोऽस्मिन्पवित्रे गेहलोटवंशे समुत्पन्न इति प्राचीनेतिहासकारा वदन्ति. स च प्रतिदिनं वर्धमानबलं दिल्लीश्वरमगणयन्स्वराज्यव्यवस्थामप्यकुर्वन्केवलं सुन्दरीभिर्ललनाभिर्विलसन्मल्लानां युद्धानि पश्यन्आयुर्व्ययमकरोत्. दिल्लीश्वरश्च स्वसेनायां शतघ्नीसंख्यामवर्धयत्. एष च केवलं पदातिदलं वर्धयन्निश्चिन्तं तस्थौ. राजनीतावपि अनवधानतया व्यवहरन् स शत्रुनन्दनोऽभूत्. तेन सर्वे सामन्ता अपि स्वामिन ईदृक् वर्तनमवलोक्य खिन्ना निरुत्साहा अजायन्त.

ईदृशीं राज्यस्थितिं चारमुखेन विज्ञाय गुर्जरनराधीशश्चितोडनगराधीशं जेतुं मनश्चक्रे. तं च मेवाडनृपोऽपि साहाय्यमकतिस्म. यदा च गुर्जरनराधिपो यवनो मेवाडदेशमाचक्राम तदा तु महता धैर्येण स्वीयं पदातिदलमादाय तेन समं योद्धुमाजगाम विक्रमाजितः. परन्तु शीघ्रमत्र लीलयैव तेन पराजितोऽन्यत्र निभृतमतिष्ठत्.

अथ स गुर्जराधिपो महता वेगेन चितोडदुर्गं रुरोध. तदानीं च प्रायो राजस्थानवासिनः क्षत्रियराजास्तस्य चितोडदुर्गस्य रक्षणार्थमागच्छन्. परन्तु दुर्दैवतस्ते शूरा अपि रजपूतक्षत्रियाः पराभूताः स्वदारानग्निसात्कृत्य स्वयमपि समरभूमावपि अशेरत. अचिराच्च स गुर्जराधिपोऽपि दिल्लीश्वरेण बाबरपुत्रेण हुमायूननाम्ना पराजितः. विक्रमाजितश्च तेनैव पुनरपि मेवाडसिंहासने

स्थापित:. एतावन्तं पराभवं लब्ध्वाऽपि विक्रमाजित: सावधानो न बभूव. स च राजसभायां स्वपितु: पालकं कर्मचन्दनामानं सामन्तमघातयत्. तेन सर्वेऽपि सामन्ता रुष्टा उत्थाय स्वस्वगृहाण्यगच्छन्. द्वितीयदिने बनबीरनामा पृथ्वीराजस्य दासीपुत्रस्तं विक्रमाजितमवधीत्. स्वयं च नृपतिरभवत्. अनेन राजवधेन सर्वेऽपि राजसंबंधिनो यद्यपि दु:खाकुला अभवंस्तथापि सामान्यत: प्रजाजना उदासीना एवासन्.

## ( ४ )

वाचका:, कृत्स्नेऽप्यस्मिन्भारतेतिहासे विशेषतश्च राजस्थानेतिहासेऽमानुषाणि यानि क्रूराणि कर्माणि संवृत्तानि तत्र कारणं तदानींतनानां राज्ञां बहुपत्नीकत्वमेव. बहो: कालादारभ्यानेनैव दोषेणासंख्यानि युद्धानि बभूवु:. तत्र चागणितानि कुलानि नामशेषाणि अभवन्. परकीयाश्च अनेनैव छिद्रेण स्वपादान्प्रसार्य भारतस्वातंत्र्यमपाहरन्. प्रसिद्धस्य भगवदवतारस्य रामचन्द्रस्य वनवासादिकमप्येतद्दोषमूलकमेव. अन्त:पुरेषु निवसन्त्य एता राजभार्या राज्यलोभसमाकुला नानाविधान्मंत्रानकुर्वंस्तेन राज्यशासनमपि न सम्यगिताभवत्. ताश्च दुष्टहृदया: समये समये स्वपतिमपि हत्वा स्वपुत्रं राज्येऽस्थापयन्.

महाराणे संग्रामसिंहे दिवंगते तदीया पत्नी स्वपुत्रं राज्ये स्थापयितुकामा स्वपतिशत्रुं बाबरनामानं दिल्लीश्वरं विज्ञापयतिस्म साहाय्यार्थं. स च ज्ञातरजपूतक्षत्रियस्वभाव: सहसा तदामंत्रणं नांगीचकार.

यवनसमये च यवनराजानां बहुपत्नीकत्वं निरतिशयमासीत्. केषांचिद्दिल्लीश्वराणां दाराः सहस्रादप्यधिका आसन्. तेन परस्परं कलहायमानां दाराणां मंत्रैस्तथा शत्रूणामुपद्रवैस्ते कथमपि अजीवन्. तस्मादिदं बहुपत्नीकत्वं सुधिया व्यक्तव्यमेव.



# ४ पितृचरितम्.

१ उदयसिंहस्यबाल्यं.
२ संकटपरंपरा.
३ राजपदप्राप्तिः.
४ राजाऽकबरश्च.

( १ )



महाराजः संग्रामसिंहो दिल्लीश्वरेण बाबरनाम्ना यवनपतिनासह युद्ध्वा दिवं गतवान्. तदीयौ द्वौ पुत्रौ शीघ्रमेव परलोकं जग्मतुः. ये च सामन्ता विक्रमाजिते पृथ्वीराजदासीपुत्रेण निहतेऽपि उदासीना एव तस्थुस्तेषामयं मनोरथ आसीत्. यत् संग्रामसिंहस्यौरसः पुत्र उदयसिंहोऽद्यापि बालोऽस्ति ताव-त्पर्यंतं पृथ्वीराजदासीपुत्रेण बनबीरेण राज्यकर्म कर्तव्यं. समर्थे-चोदयसिंहे सर्वैरपि सामन्तैर्मिलित्वा स एव राजपदेऽभिषेचनीय इति. परन्तु राज्यलोभाक्रान्तमनाः स बनबीरः कर्तव्याकर्तव्य-विवेकशून्यस्तमपि बाप्पारावळवंशतन्तुमुदयसिंहं हन्तुमियेष.

उदयसिंहश्च केवलं षड्वर्षो बालः किमपि राजवृत्तं नैव ज्ञातुं प्रबभूव. यद्यपि सर्वेऽपि सामन्ता राजतया तमेवादरयन् परन्तु प्रकटं तथा नादर्शयन्. सर्वाश्चान्तःपुरवासिन्यो विक्रमा-जितदारा भर्तृवधदुःखाकुला उच्चैराक्रोशन्.

---

# ( २ )

क्रूरकर्मा पृथ्वीराजदासीपुत्रो बनबीरः संग्रामसिंहपुत्रं राज्याधिकारिणमुदयसिंहं हन्तुमिच्छुः सायंकालं प्रतिपालयतिस्म.

अथ क्रमेण विक्रमाजितशोकइव मन्दीभवति सूर्यसंतापे, नूतनराजसंसर्गलुब्धाया राजलक्ष्म्या इव प्रतीचीदिशो मुखे रक्तकमलद्युतिहारिणि, अत्युन्नतवृक्षाग्रस्पर्शिषु रविकराग्रेषु, सर्वस्मिन्नाकाशमण्डले प्रखररविसंतापादिव रक्ते, शनैःशनैरन्तर्हितं दिवाकरमवलोक्य चौरइव भूतलं प्रविशति गाढान्धतमसे, स्वामिभक्तेषु सेवकेषु इव प्रदीपेषु तमोनिराकरणपरेषु सत्सु सर्वानपि जनान्विक्रमाजितशोकमग्नान्विलोक्य वृकादयोऽशुभसूचकाः पक्षिसंघा अपि उच्चैराक्रोशन्.

तदानीं तु केवलमन्तःपुरवासिन्यो राजांगनाः स्वभर्तृवधदुःखाकुला उच्चैश्चुक्रुशुः. उदयसिंहश्च धात्र्या पन्नादेव्या दुग्धान्नं भोजितः पर्यंकेऽशेत. तं चाक्रोशमाकर्ण्य भीता पन्नादेवी अन्तःपुरादागतं सेवकं तत्कारणमपृच्छत्. सोऽपि सर्वां कथां कथयित्वा अन्ते राजवधं शशंस. सा तु तन्निशम्य दुःखाकुलाऽपि सवितर्कं राजघातकादस्योदयसिंहस्य नाशमुत्प्रेक्षमाणा किमपि किमपि विचारयन्ती तस्थौ. तदानीमेव च तं सेवकमाह पन्नादेवी, अहं चेमं बालकमस्मिन्करंडके शाययित्वोपरिष्टादाम्रपत्राणि विकिरामि. त्वं चेमं करंडकं मूर्ध्ना वहन्दुर्गमवतीर्य नद्यास्तीरे तिष्ठ. अहं चानुपदमेव समागच्छामि. यदि कश्चित्पृच्छेत्किमस्ति अस्मिन्करंडकइति तदा निःशंकमाम्रफलानीति ब्रूहि इति.

एवं कथितः स स्वामिभक्तः सेवकस्तं करण्डकं मूर्ध्ना गृहीत्वा निर्विघ्नं चितोडदुर्गादवतीर्य नदीतीरे पन्नादेव्या आगमनं

प्रतिपालयन्नातिष्ठत्. मार्गे च स बालक उदयसिंहो न प्राबुध्यत. नापि रुरोद.

पन्नादेवी च तस्य शयने स्वपुत्रं शाययित्वा शत्रोरागमनं प्रतिपालयन्ति तस्थौ. सा च मनसीत्थं चक्रे—यद्येषा शय्या मयाऽधुना रिक्तैव स्थाप्यते तदा राजपुत्रगवेषणार्थं सर्वत्र चाराः प्रचरन्ति. तदा राजपुत्रस्यावश्यमनिष्टं भवेत्. तत्सम्प्रति मदीयं पुत्रं बलीकृत्याऽपि राजपुत्रो रक्षणीयः. यो हि मम स्वामी स एव मम बालकस्यापि. सेवकस्य चायं धर्मो यत् स्वप्राणव्ययेनाऽपि स्वामी रक्षणीय इति. तदधुना स्वव्रतपालनार्थं मया प्राणप्रियस्य शिशोः पुत्रस्य प्राणास्तर्पणीया इति. एवं विचिन्तयन्ती सा पुत्रप्रेमाश्रुजलक्लिन्नयना कथमपि तत्र तस्थौ.

अचिरादेव क्रूरकर्मा कृष्णवस्त्राच्छादितसकलदेहः, नग्नामसिलतां दक्षिणेन करेण वहन्, सिसोदियावंशस्य धूमकेतुरिव, यमकिंकरइव रक्तलोचनः क्रूरेण ध्वनिना 'क्वास्ते राजकुमार' इति वदन्प्रविवेश बनबीरः. सा च तं राजकुमारप्राणहरणाय समागतं यमसेवकं मन्वाना स्वकर्तव्यपालने संजातनिश्चया सहसा तं पर्यङ्कशायिनं स्वपुत्रमदर्शयत्. तस्मिन्नेव क्षणे बनबीरस्य तीक्ष्णः खड्गस्तस्य बालकस्योरो निर्भिद्य करुणेनाक्रोशेन समं बहिराजगाम. सा तु तस्मिन्समये शोकेन हृदये परिपूर्णाऽपि केवलं स्वामिभक्तिव्रतपालनाय जडेव तस्थौ. इदं च क्रूरं कर्म विधाय गते बनबीरे सा पन्नादेवी स्वपुत्रस्य शवमश्रुभिरभिषिच्य तस्य जन्म कृतार्थं मेने.

राजभार्यास्तु इदं राजपुत्रस्य वधं निशम्यातिशोकाकुला महात्मनः संग्रामसिंहस्य वंशक्षयं मन्वानाः सुतरामशोचन्. सामन्ता-

अपि बनबीरस्य क्रौर्यमवलोक्य खिन्ना अपि रावळवंशक्षयं मन्यमानाः किमपि तद्विरुद्धं नाचेष्टन्त.

पन्नादेवी तत् स्वपुत्रस्य प्रेतं राजसेवकैः स्मशानं नीत्वा दग्धमित्यवगम्य पुत्रप्रेम्णा स्मशानं गत्वा तद्रक्षां स्वाश्रुजलैराविलां कृत्वा रक्षितस्य राजपुत्रस्य वार्तालाभाय नदीतीरमाजगाम. अपश्यच्च कुशलिनं तेन स्वामिभक्तेन सेवकेन पालितं राजपुत्रं. वीक्ष्य च संतुष्टा सत्वरं तं गृहीत्वा चितोडाधिपसामन्तस्य सिंगरावस्य सन्निधिमागत्याश्रयं ययाच. स च तं स्वामिकुमारं प्रत्यभिज्ञायाऽपि तद्रक्षणात् भयं मन्यमानो नाशक्नोत्. ततश्च पन्नादेवी डोंगरपुराधिपं यशाकर्णं द्वितीयं सामन्तं ददर्श. विज्ञापयामास च. सोऽपि तत्पालनेऽनिष्टमात्मनो मन्यमानो न तं स्वीचकार.

स्वामिभक्तिरिव मूर्तिमती पन्नादेवी तं दुर्दैविनं राजपुत्रं गृहीत्वा दुर्गमादरवल्लीपर्वतान्निर्गत्य कुमळनेरनगरं ययौ. मार्गे च क्लेशासहो राजपुत्रोऽतिदुःखान्यनुबभूव. परन्तु पन्नादेवी तं भगवती जगदम्बेव प्रतिपालयामास. तत्र च 'असमाह' नाम्नः श्रावकस्य गृहं गत्वा सा तमवदत्—श्रावकश्रेष्ठ? अयं हि ते स्वामिपुत्रः. मया च स्वपुत्रबलिदानेन रक्षितः. तदधुनेनं पालय, इति. सोऽपि किंकर्तव्यतामूढो विचारमग्नोऽभूत्. तदानीं तस्य श्रावकस्य वृद्धा माता समीपस्था तं स्वपुत्रमवोचत्. वत्स? इमा हि संपद्विपदः केवलं संसारसागरस्य लहर्यः. कदाचिदित आगताः क्षणादूर्ध्वमन्यतो गमिष्यन्ति. तद्धीमता न कदाचिदपि व्यामोहः कर्तव्यः. मानवस्येदं प्रधानं कर्म—यत्—स्वकर्तव्यपालनं. तदयं त्वदीयं गृहमागतः स्वामी त्वया नोपेक्ष्यः.

अयं च कदाचित्तव भाग्यं वर्धयेत्. परमेश्वरस्येच्छां को हि जानाति. यमाश्रित्य वयं सुखेन कालमयापयाम तस्मिन्नेव गृहमागते तदादरवैमुख्यं कृतघ्नतां दर्शयति. तस्मात्त्वयाऽयं स्वामी रक्षणीय एवेति.

सोऽपि सद्बुद्धिः श्रावकोमातुरिदं वचनं निशम्य जातविस्रंभस्तं बालकं स्वसमीपे स्थापयामास. ततश्च सा कृतकृत्या पन्नादेवी चितोडदुर्गमाजगाम. अन्यथा 'रजपूतकामिनी श्रावकस्य समीपे किमर्थं तिष्ठतीति जिज्ञासमाना जना इदं रहस्यं प्रकटीकरिष्यंति.' इति मन्यमाना सा पन्नादेवी महता दुःखेन ततोन्यवर्तत. सोऽपि तं बालमुदयसिंहं स्वभागिनेयं ख्यापयंस्तेन समं तथैव व्यवाहरत्.

३

तत्र च क्रमेण वर्धमानः स उदयसिंहः शनैःशनैः क्षात्रियचिन्हानि बभार. तस्य च निरतिशयं धैर्यं मृगयोत्सुकत्वमश्वारोहणकौशलं च निरीक्ष्य जना अपि सुतरांसमशङ्कत. युक्तंचैतत्. प्रयत्नशतेनाऽपि गोपिता कस्तूरिका न स्वामोदं जहाति. नहि रत्नपरीक्षा शपथेन भवति. अस्तु.

एकस्मिन्दिने तस्य श्रावकस्य गृहे श्राद्धमासीत्. तदा बहवो रजपूतक्षत्रियास्तथा श्रावकाश्च भोजनार्थं तेनाहूताः. तत्र तेषु सर्वेषु यथाक्रमं स्वस्वस्थाननिविष्टेषु सत्सु उदयसिंहः सर्वत्र परिवेषणार्थं प्रचचाल. राजस्थान इयं रीतिर्यच्छ्रावकस्पृष्टमन्नं रजपूतक्षत्रिया न भक्षन्तीति. एवंसत्यपि श्रावकभागिनेयत्वेन प्रसिद्ध उदय-

सिंहः सर्वानपि पर्यवेषयत्. न कोऽपि तं निषिषेध. तदेतत्सर्वं वीक्ष्य जना उदयसिंहं क्षत्रियवंशसंभवमेवामन्यन्त.

अथ सर्वेऽपि ते सामन्ताः क्रमेण जनमुखात्संचरन्तीमिमां वार्तां निशम्य तत्रागत्य संग्रामसिंहस्य जीवन्तं वंशाकुरमपश्यन्. तदानीमेव ते राजस्थानवासिनः सामन्तानाहूय सभां विधाय तस्योदयसिंहस्य वृत्तं सर्वेभ्यः श्रावयामासुः. तदानीं स सात्विकः श्रावकस्तेषु सर्वेषु सामन्तेषु वृद्धस्य सामन्तस्यांके उदयसिंहं निवेश्यावोचत्—एतावत्कालपर्यंतं कथमपि पालित एष युष्माकं राजा. संप्रति यदुचितं तद्भवद्भिरेव कर्तव्यमिति. स तु वृद्धः सर्वजनसंशयनिरासार्थं तेनोदयसिंहेन सममेकपात्रेऽभुंक्त. सोनीगडदुर्गाधिप उदयसिंहाय स्वकन्यामदात्. ततः शीघ्रमेव कुंभोदुर्गे सर्वेऽपि चितोडाधिपसामन्ता मिलित्वा तं यथाशास्त्रं मेवाडसिंहासनेऽभ्यषिंचन्. प्रत्यभिवदन्ति स्म च.

स तु राजवधकलङ्कचितोडाधिपत्यः क्रूरो बनवीरः सामन्तैः समं कलहायमानो न प्रजाभ्योऽप्यरोचत. सामन्ता अपि तमेव संग्रामसिंहपुत्रं स्वाधिपं विधातुं पर्युत्सुका अभवन्.

अत्रान्तरे झालावाडाधिपोऽपि स्वकन्यामुदयसिंहाय ददौ. तस्मिंश्च विवाहमहोत्सवे सर्वेऽपि सामन्ताः समागता राजानं सत्कारयामासुः. परन्तु समाहूतावपि सोळंखीमालोजीनामानौ द्वौ सामन्तौ नागच्छताम्. तेन तौ राजद्रोहिणौ मत्वा क्रुद्धास्ते सर्वेऽपि सामन्ताः स्वसैन्यान्यादाय तयोः शासनार्थं प्रययुः. बनवीरोऽपि स्वसेनामादाय तयोः साहाय्यार्थं चितोडदुर्गादवातरत्. तं च दुर्गादवतरन्तमवलोक्य ते सर्वेऽपि सामन्ता अन्यद्वारेण चितोडदुर्गं प्रविश्य बनवीरपक्षपातिनो जनान्हत्वा स्वपक्ष्यान्निरीक्षका-

न्स्थापयामासुः. स च नीचः कुकर्मा बनबीरश्च चितोडदुर्गान्निर्गतो न पुनरपि तत्प्रविवेश. द्वितीयदिने तु ते सर्वे सामन्ता महतोत्सवेन उदयसिंहं चितोडदुर्गमानीय राजसिंहासने प्रतिष्ठापयांबभूवुः. एवं क्रमेण पन्नादेवीस्वामिभक्तिः सफला बभूव.

---

## ४

यदा च उदयसिंहो मेवाडाधिपतिर्बभूव तदैव राजकोटस्थाने महाभाग्यशाली मोंगलकुलदीपः कश्चन पुरुषः प्रादुर्बभूव. यं चेतिहासकारा ' महाराज अकबर ' पदेन व्यपदिशन्ति. तस्य च संक्षेपेण वृत्तमित्थम्—संग्रामसिंहशत्रुर्बाबरो यदा भारतं विजित्य दिल्लीश्वरोऽभवत्तदा स क्रमेण चितोडप्रभृतीनि राज्यान्याक्रन्तुं प्रायतत. स्थाने स्थाने यशो लेभे च. परलोकं गते तस्मिंस्तदीयः पुत्रो हुमायूननामा यवनो दिल्लीपदं स्वीचकार. अचिरादेव शीरशहानाम्ना प्रबलेन सामन्तेन पराजितोऽन्यत्र पलायते स्म. स च सर्वतः पर्यटन्न कुत्रापि स्थैर्यं लेभे. स च केषांचित्स्वपितुः सुहृदां समीपे साहाय्ययाचनाय गतस्तेभ्य एव महत्कष्टमाप. एवं सर्वतोऽननुकूलेषु ग्रहेषु स महाभाग्यो बाबरपुत्रोऽरण्यादरण्यान्तरं पर्यटन्कथमपि अमरकोटस्वामिनं शरणमगच्छत्. सोऽपि तस्मा अभयं दत्वा स्वसमीपेऽस्थापयत्. तत्रैव तस्य दुर्दैवशालिनो हुमायुनस्य पत्नी परिपूर्णदिवसा तेजस्विनं पुत्रं प्रासूत. स तु यवनाधिपः पुत्रजन्म निशम्य सानन्दोऽपि वित्तहीनः केवलं कस्तूरिकाण्डकोशं निर्भिद्य सर्वेभ्यः स्वसुहृद्भ्यः कस्तूरिकाचूर्णं ददौ. तदामोदश्च सर्वत्र प्रससार. तं सुरभिगन्धं सर्वतः प्रसरन्तमवलोक्य हुमायुनः सानन्दमाह—सामन्ताः ! एवमेवास्य मम

पुत्रस्य सद्गुणगन्धोऽपि सर्वत्र भारते प्रसरत्विति परमात्मानमहं प्रार्थये इति.

अथ द्वादशवर्षपर्यन्तं नानाक्लेशान्विषह्य स हुमायूनः काश्मीरमागच्छत्. तदानीं च पठाणवंशजः शिकंदरनामा यवनो दिल्लीपतिरासीत्. तं राज्यव्यवस्थानभिज्ञं निशम्य संजातोत्साहः पुनरपि स्वदैवं परीक्षितुं प्रायतत. स च महता जवेन सिन्धुनदीमवतीर्य दिल्लीनगरमभिलक्ष्याययौ. दिल्लीपतिः शिकन्दरोऽपि तं पराजेतुं ससैन्यं प्रचचाल. त्वरितमेव तौ सेनासमूहौ परस्परमभिमुखौ भूत्वा घोरं युद्धं व्यतनुताम्. तस्मिन्युद्धेऽकबरचातुर्येण हुमायुनः पुनरपि दिल्लीपतिरभूत्. पराजितश्च शिकंदरः. तदानीं युवराजस्याकबरस्य वयः केवलं द्वादशवर्षाण्यासीत्. पिता च स्वपुत्रस्य युद्धकौशलं वीक्ष्य विस्मितः प्रेम्णा तं पर्यष्वजत्. हुमायुनश्च दिल्लीश्वरपदं न चिरमभुंक्त. एकस्मिन्दिने चन्द्रशालाया अवतरणसमये पतित्वा परलोकं जगाम.

राजाऽकबरश्च तस्य पश्चाद्दिल्लीपतिरभूत्. तदानीं सर्वमपि राज्यकर्म बहिरामखाननामा तत्पितुर्विश्रामपात्रं प्रधानामात्य एवाकरोत्. अकबरश्च यदाऽष्टादशवर्षः संवृत्तस्तदा स स्वयमेव राजकर्म चक्रे. प्रथमतः स्वीयराज्यविरोधिनो यवनानशात्. ततश्च स्वपितुर्विश्रासघातकान्रजपूतक्षत्रियानजयत्. अस्मिन्समये जयपुरनराधीशो भारमल्लो नाम स्वकन्यामकबराय ददौ.

वाचकाः ! बहवो हि इतिहाससंशोधका वदन्ति यद्रजपूतक्षत्रियैर्यवनेभ्यः स्वकन्यकाः प्रदत्तास्तन्न स्नेहेन वा संतोषेण वा प्रेमवर्धनार्थं वा किंतु कथमपि स्वजीवितरक्षणार्थं. बलोन्मत्ता दिल्लीपतयः सर्वानपि क्षत्रियानुच्छेत्तुं प्रायतन्त. तन्निराकरणार्थ-

मेव ते स्वात्मजा व्यतरन् इति. प्रमाणयन्ति चात्र—यदि संतोषेणायं व्यवहारः संवृत्तस्तदा दिल्लीश्वरयवनकन्यका अपि कुतो न क्षत्रियराजैः परिणीताः? इति.

वस्तुतस्तु स्यान्नामेदमपि सत्यं तथापि तैः क्षत्रियराजैर्महदनुचितं कृतं. यतो बलोन्मादमत्ता दिल्लीश्वरा न नित्याः किंतु क्षणिका एव. तादृशक्षणिकदुःखपरिहाराय परमपवित्रस्य वंशस्य कलंकीकरणमनुचितमिति मंदबुद्धिरपि कथयेत्. तादृशान्क्षणिकान्क्लेशान्विषह्याकलंकिनः पौर्णमासीचन्द्र इव अद्यापि सिसोदियावंशः किं न विराजते? अद्यापि तस्य पुण्यश्लोकस्य प्रतापसिंहस्य यशस्तोमो न प्रकाशते? अस्तु.

एवं विशेषतो राज्यकर्मणि परमदक्षः स दिल्लीश्वरो अकबरस्तारुण्यमदशाली परममान्यानि अतिपवित्रकुलसंभवक्षितिपशासितानि राजस्थानवर्तीनि क्षत्रियराज्यान्यसहमानः स्वराज्यमर्यादां वर्धयितुमिच्छंस्तान्याक्रन्तुं मतिं चक्रे. तदर्थं च स स्वसेनां वर्धयन्नकस्मादेव स्वजन्मभूमौ स्वसजातीयानेव राजद्रोहिणः श्रुत्वा प्रथमतस्तान्दण्डयितुं प्रायतत.





# ५ उदयपुरस्थापना.

१ चितोडाक्रमणम्.
२ युद्धम्.
३ अकबरस्यकार्यम्.
४ उदयपुरस्थापना.

## ( १ )



अकबरश्च महता परिश्रमेण सर्वानपि राजद्रोहिणो जनान्हत्वा स्वराज्यं निष्कंटकमकरोत्. ततः स्वराज्यमीमां वर्धयितुकामः स्वसेना वर्धयामास. तथैव तां सुशिक्षितां विधाय अतिप्राणहारिभिर्नवीनैः शस्त्रैस्तां दुर्जयामकरोत्. ततश्च प्रथमतः शौर्यजन्मभूमिमिव स्वातंत्र्यप्रियजनालंकृतां मेवाडमेदिनी जेतुकामः पितामहमुखाच्छ्रुतरजपूतक्षात्रियशौर्यवृत्तः प्रथमतः स्वकीर्तिप्रसारार्थं मेवाडपतिमेव जेतुमियेष. अथ निश्चितकृतो मेवाडाक्रमणे स प्रथमतस्तांस्तान्नृपान्राजस्थानवासिनः स्वानुकूलान्व्यधात्. तेषु केषांचित्क्षत्रियराजानां कन्यकाः स्वपुत्रपत्नीर्व्यधात्. तेभ्यः संबंधिभ्योऽगणितधनदायिनो भूविभागान्व्यतरत्. केभ्यश्चिदुत्तमोत्तमानलंकारांस्तथा सन्माना-

न्वितीर्य स्वपक्ष्यांश्चक्रे. तेऽपि लौकिकीं बुद्धिमनुसृत्य वश्या अभवन्.

अथ कृत्स्नामपि सेनामादाय दिल्लीपतिः अकबरः क्रमेण नानाराज्यान्यात्मसात्कुर्वंश्चितोडदुर्गस्य सन्निधौ समाजगाम. रुरोध च तद्दुर्गं. यद्यपि—उदयसिंहश्च अकबर इव महताकष्टेन लब्धराज्यस्तथापि स राज्यलाभेनात्मानं कृतकृत्यं मन्यमान इतरजनवल्लौकिकानि सुखान्यनुभवन्क्षीणतेजा इवाभूत्. अकबरस्य पिता हुमायूनः सदाचारसंपन्नः कर्तव्याकर्तव्यविचारदक्ष आसीत्. स च विपत्तावपि महता सावधानेन पुत्रमशिक्षयत्. तेन बाल्यएव अकबरोऽलौकिकं युद्धकौशल्यं प्रादर्शयत्. उदयसिंहस्तु महता प्रयत्नेन पन्नादेव्या बाल्ये रक्षितः श्रावकस्य गृहेऽवर्धत. तेन तस्य शिक्षाऽपि श्रावकस्वभावसमाऽजायत न पुनः क्षत्रियस्वभावोचिता. किं च—अकबरस्य सुहृदो भारतवासिनो च दुर्दैवतस्तस्य सहाय्या अद्वितीया आसन्. अकबरस्य बहिरामस्खाननामा बृहस्पतिरिव राज्यकार्यकुशलोऽमात्य आसीत्. पश्चाच्च ' अबुलफजल ' नामा यवनस्तत्सचिवः. अयमेव कृत्स्नानपि राज्यकार्यनियमान् अत्युत्तमान्व्यधात्.

उदयसिंहस्तु केवलं राजचित्तवृत्त्यनुसारिभिर्लौकिकैः पुरुषैः समावृतः कथमपि राज्यकार्यमकरोत्. न सेनां निरीक्ष्य प्रोत्साहयतिस्म. नापि महत्वाकांक्षांबभार. नापि चारमुखैः शत्रुवृत्तान्तं विज्ञातवान्. तेन अकबरः सर्वमपीमं वृत्तान्तं ज्ञात्वा मेवाडदेशं विजेतुं समाजगाम. किं च यथा हि कृत्स्नेऽपि भारतवर्षे राजस्थानमेव प्रकृष्टयोधृशालीति सर्वे जना मन्यन्ते तत्रापि मेवाडदेशोऽतिशयेन, तथैव सर्वेषु राजस्थानवासिषु मेवाडपतिमेव सर्वो-

त्कृष्टत्वेन. तेन तस्य जये–प्रधानमल्लनिबर्हणन्यायेन–सर्वेप्यवशिष्टा राजानोऽनायासेन वशा भविष्यन्ति. वशीभूतेषु राजसु मदीयराज्यमर्यादाऽपि वर्धेतेति मेनेऽकबरः. युक्तं चैतत्. कथमन्यथा अकबरश्चक्रवर्तित्वमलप्स्यत यदि नैतां महत्वाकांक्षामभरिष्यत्. अस्तु. प्रकृतमनुसरामः.

स च अकबरः स्वस्कंधावारं सुव्यवस्थाप्य चितोडदुर्गं निरुद्ध्य रात्रिंदिवं शतघ्नीगोलकैरन्तर्वासिनं जनं पुटपाकवस्थामलंभयत्. यदा च अकबरः ससैन्यं समागत्य चितोडदुर्गं रुरोध तदैवोदयसिंहः कतिपयैः सेवकैः समं चितोडदुर्गान्निर्गत्य प्रथमतो राजाविपालनामके स्थाने न्यवसत्. ततोऽपि निर्गतोऽरवलीपर्वतमध्ये केवलं विलासार्थं रमणीये सर आसीत्तत्रावसत्.

## ( २ )

राजानमुदयसिंहं चितोडदुर्गान्निर्गतमवलोक्य खिन्ना अपि सर्वे चितोडाधीशसामन्ताश्चितोडदुर्गरक्षणार्थं सन्नद्धा अभवन्. प्रायः सकला अपि राजस्थानवासिनो रजपूतक्षत्रियाश्चितोडदुर्गं तथा मेवाडाधिपतिसिंहासनं प्राणेभ्योऽपि प्रियममन्यन्त. ते च सर्वतः समाक्रान्तं चितोडदुर्गं मोचयितुं समागता एकत्रामीलन्. तत्र चैकमत्येन वर्तमानास्ते युद्धं प्रारभन्त.

तत्र शूर साळुम्ब्राधिपतिश्चोंडावतकुलभूषणः साहिदासश्चितोडदुर्गस्य सूर्यद्वारमपालयत्. तथैव पृथ्वीराजवंशजाः क्षत्रियाः, झालावाडवंशवर्धकाः सामन्ताः, करमचन्द्रप्रभृतयः सर्वे क्षत्रियवीरा अन्यानि द्वाराणि अपालयन्. न केवलं तदानीं पुरुषा एव

योद्धुं समागच्छन् किंतु क्षत्रियकुललक्ष्म्यो भारतललना अपि. ताश्च तैः समेता युध्यमाना अवेक्ष्य दिल्लीपतिः अकबरः सुतरां व्यस्मयत.

प्रथमतश्च तैः पुरुषसिंहैराक्रान्ता सा यवनसेना पलायतेस्म. अकबरस्तु तस्याः सेनाया निवर्तनेऽशक्तः स्वयमपि न्यवर्तत. मेने च चितोडविजयो दुर्लभ इति. निवर्त्य च दूरंगते निराशे दिल्लीपतौ अकबरे सर्वेऽपि सामन्ता उदयसिंहसमीपमागत्य विजयवार्तामकथयन्. स तु कर्तव्याकर्तव्यविचारदाक्षिण्याभावशाली कृत्स्नस्य जयस्य कारणमियं मे गणिकेति व्यपादिशत्. यद्यपि सा गणिका अकबरसैन्येन समं चिरमयुध्यत तथापि तावतैव सैव कारणं जयस्येत्यन्याय्यं. अस्तु.

तत्तस्यापमानकारकं वचो निशम्य क्रुद्धास्ते मानधना रजपूतक्षत्रियसामन्ता झटिति समुत्थाय तां कर्तव्यदक्षामपि गणिकां क्रोधेन यमालयं प्रैषयन्. निरुत्सुकाश्चाभवन्.

इमां वार्तां निशम्य संजातोत्साहः अकबरः पुनरपि स्वसेनां व्यवस्थाप्य योद्धुं न्यवर्तत. तं च निवर्तमानं प्रेक्ष्य भग्नोत्साहा अपि ते क्षत्रियश्रेष्ठाः चितोडदुर्गरक्षणार्थं सन्नद्धा अभवन्.

अचिरादेव भयंकरं युद्धं प्रावर्तत. अपयशोमलिनीकृतमुखास्ते यवनसैनिकाः संरंभेण यशोलाभार्थमयुध्यन्त. रजपूतक्षत्रिया अपि प्राणान् तृणीकृत्य चितोडदुर्गं रक्षितुमचेष्टन्त. सूर्यद्वारपालः साहिदासोनाम क्षत्रियश्रेष्ठो धैर्येण युध्यमानो भीष्मइव यदा धरणीतले सुष्वाप तदा निर्भीकः केवलं षोडशवर्षदेशीयः केळव्याधिपः पट्टानामक्षत्रियश्रेष्ठः तद्द्वारमपालयत्. स तु बालतया सद्यो निहतस्य पितुः शोकेन निरुत्साहो माभूदिति तं प्रोत्साहयितुं स्वयं तदीया

माता दैत्यवधाय समरभूमाववतीर्णा जगदम्बेव खड्गहस्ता चिरमयुध्यत. नैतावदेव किंतु युवत्यः स्नुषाः परमक्रोधेनायुध्यन्त. ताश्च रजपूतरमणीर्युध्यमाना अवलोक्य सर्वेऽपि महंमदीयाः सैनिका नितरां व्यस्मयन्त. रजपूतक्षत्रियाश्च महतोत्साहेन युयुधिरे.

तस्मिन्युद्धे क्षत्रिया अगणितान् यवनसैनिकान् यमालयातिथीनकुर्वन्. परन्तु यवनसैनिकानामसंख्यतया विजयप्राप्त्याशाऽत्यल्पाऽदृश्यत.

अत्रान्तरेऽर्जुनइव धनुर्विद्याकुशलो भीम इव प्रबलः सकलक्षत्रियकुलश्रेष्ठो बेदनूराधिपो जयमल्लः शत्रुपक्षादागतेन भयंकरेण शतघ्नीगोलकेनाहतो मुमूर्षुरभवत्. तं च तदवस्थमवेक्ष्य सर्वेऽपि रजपूतवीरा विजयलाभे निराशाः कुंकुमवस्त्रधारणार्थं मतिमकुर्वन्. तदानीं चाष्टसहस्रसंख्याकांस्तान्कुंकुमवासांसि परिधाय समागच्छतो वीक्ष्य भयाकुला यवनाः पलायितुमारभन्त. ते च निर्भीका व्याघ्रा इव क्रोशन्तो मेषानिव तान् यवनसैनिकान् हत्वा स्वयं स्वर्गं लोकमयुः.

अकबरश्च तेषां वीराणां पराक्रमानवलोक्य सन्तुष्टस्तान् स्ववशान्विधातुं मतिमकरोत्. अगणितसैनिकविनाशेन संजातक्रोधः पुनरपि सेनां व्यवस्थाप्य चितोडदुर्गं प्रवेष्टुं धैर्यमकरोत्.



## ( ३ )

अथ भगवति सकललोककर्मसाक्षिणि मरीचिमालिनि पूर्वाचलमारूढे सति विजयमदोन्मत्तैस्तैः सैनिकैर्बुभुक्षितैर्वृकैरिव समेतोऽकबरस्तत्प्रसिद्धं चितोडदुर्गं प्रविवेश. सूर्यद्वारेण च प्रविश्य

स क्रूरो दिल्लीपतिर्दीनानां नगरवासिनां जनानां शिरांसि च्छेत्तुं स्वसैनिकानशात्. ते चेमामाज्ञां लब्ध्वा सानन्दाः क्रूरमतयः क्रोधेन सर्वान् जनान् हन्तुमारभन्त. तस्मिन् समये त्रिंशत्सहस्रसंख्याका जनाः प्राणांस्तत्यजुः. तदानीं तु न केवलं नागरिका एव शत्रुखड्गभक्ष्या अभवन् किंतु राजकुलसंभवा अपि नराः सप्तदशशतानि पंचत्वं प्रापुः.

एवं निरतिशयं हिंसककर्म विधाय दिल्लीपतिरकबर आर्यपूजितानां देवतानां सुप्रसिद्धानि दर्शनीयानि देवालयानि निर्भिद्य भूमिसादकरोत्. तथा मंदिराणि राजप्रासादानपि. तेषां स्थाने स्वोपासनामंदिराणि व्यरचयत्. चितोडदुर्गस्थाया नगरदेव्याः पटहान् दीपानलंकारान् कपाटान् स्वोपासनामंदिरस्य शोभार्थे स्वराजधानीं निनाय.

वाचकाः ! यो हि अकबरः समशीलोऽद्वेष्टा सकललोककल्याणदक्ष इति प्रायः सर्वैरेवेतिहासकारैर्वर्णितस्तस्यैव पश्यत क्रूराणि कर्माणि. निरतिशयद्वेषशालिनो निर्विशेषमबलानामपि घातकस्य कीदृशं समशीलत्वमिति त एव जानन्ति. ये खलु शत्रूणां पत्नीरपि मातृवदभिनन्दन्ति, ताश्च निरतिशयमादरयन्तः सानन्दं स्वस्थाने प्रेषयन्ति, ते मूर्ता नीत्यादर्शा रजपूतक्षत्रिया वाऽऽदरणीया अथवाऽसहायानां राजस्त्रीणां घातेन प्रकटीकृतपौरुषोऽकबरो वाऽऽदरणीय इति यूयमेव विचारयत. तस्माद्यदितिहासकारैरकबरगुणवर्णनं कृतं तन्न समीचीनमिति न तत्रादरः सतां.

वस्तुतस्तु—प्रकृतिविषमाणां परांगनालोलुपानां यवनानां साधुत्वमप्यार्यजनदुर्जनसाम्यं न भजते. यथा हि शैत्यं लम्भितोऽप्याग्निर्न तप्तस्य जलस्य स्वभावं प्राप्नोति. एवमग्रे सज्जनसंगत्या

वा वार्धक्याद्वा शान्तमना अप्यपि अकबरः पूर्ववयसि यानि कर्माणि कृतवांस्तैः कर्मभिः खलु स कूरानल्लाउद्दीनाखिलजिप्रभृतीनप्यधः कुरुतेस्म. अस्तु. प्रकृतमनुसरामः. तस्मिंश्चितोडदुर्गे स्वसामन्तं ससैन्यं नियुज्य स्वयं विजयदुन्दुभिं वादयन् दिल्लीनगरं प्रविवेश.

---

## ( ४ )

उदयसिंहश्च चितोडदुर्गात्पलायितः प्रथमतो राजपिंपळाधीशस्य संनिधिमगच्छत्. ततोऽप्यलब्धस्वास्थ्यो दुष्प्रवेशस्यागणितवृक्षावलीमंडितस्य क्रूरव्याघ्रादिपशुनिवासभूतस्यारवलीपर्वतस्य मध्ये गिरवोनामके स्थानेऽवसत्. तत्र च पूर्वमेव वनलक्ष्म्या रमणीयतामवलोक्य विस्तृतं नयनमनोहरं विकचकमलसंघपरिभूषितं स्वनामालंकृतं सरो व्यधात्. तस्य सरसस्तीरे कृतनिवासः कथंचिदुदयसिंहोऽतिष्ठत्. राजानं च तत्रैव निवसंतमवलोक्यान्येतदीयाः सामन्ता अपि तत्रैव प्रासादान् व्यरचयन्. तेन तदेव स्थानं महन्नगरमभवत्. साम्प्रतं च यदुदयपुरनामकं नगरं प्रसिद्धं तदिदमेवेति वाचका अवगच्छन्तु.



# ६ प्रतापसिंहस्यजन्म.

१ झालावंश:
२ जन्म बाल्यं च.
३ शिक्षणम्.
४ प्रतापसिंह:शक्तिसिंहश्च.

## (१)



वाचका? एतावत्पर्यन्तं मया लिखित: कथाविभाग: केवलमुपोद्घात एव. अधुनाचास्मच्चरित्रनायकस्य महाराजप्रतापसिंहस्य चरितवृत्तमारब्धं. ततश्च तत्सविस्तरं निरूपयामि.

अस्ति बहो: कालादतिप्रसिद्धं, अनेकपवित्रशूरसमरवीरजन्मपरिपूतं, पुण्यश्लोकमेवाडाधिपतिभिरपि सन्मानितं, राजस्थाने झालानामकं प्रसिद्धं कुलं. तत्र शोणिगुरुनामक: कश्चन क्षत्रियश्रेष्ठोऽजायत. स एवाऽस्मच्चरितनायकस्य मातामह:. अस्तु. अस्मिन्कुले संभूता: सर्वेऽपि क्षत्रियश्रेष्ठाश्चितोडाधिपसामन्ता: समये समये तं साहाय्ययन्तिस्म.

एकदा हळदीघाटनामकेऽरवलीपर्वतोपत्यकायां वर्तमाने स्थले यवनानां क्षत्रियै: समं महद्युद्धमभूत्. तत्र क्षत्रियैर्निहताअपि यवना: संख्याधिक्येन तानजयन्. ते सर्वेऽपि यवना महाराजं प्रता-

पसिंहं हन्तुमिच्छन्तो राजचिन्हमंडितच्छत्रानुरोधेन वेगेनागच्छन्. तांश्च समीपमागतान्स्वकीयांश्च विरलान्वीक्ष्य जाताशंको झालाकुलरत्नं सामन्तः स्वामिप्राणरक्षणार्थं झटिति महाराजं प्रतापसिंहमाकृष्य स्वयं च्छत्रस्याधस्तात्तस्थौ. ते च यवनास्तमेव महाराज प्रतापसिंहं मन्यमाना अघ्नन्. एवंरीत्या स्वामिकार्यार्थं स्वप्राणानजहात्. तस्य स्वामिभक्तिमवलोक्य प्रतापसिंहस्तद्वंशजेभ्यो ' राजा ' इत्युपाधिं वितीर्य पटहसन्मानं ददौ. राजसभायामपि ते दक्षिणविभागेऽतिष्ठन्. स्वकन्यामपि तद्वंशजानां मध्येऽन्यतमाय ददौ.

एवं राजस्थाने लब्धख्यातिसन्मानमिदं झालाकुलं. तत्र शोणिगुरुनामा कश्चन शूरः सामन्त आसीत्. स च निभृतं निवसते मेवाडाधीशायोदयसिंहाय स्वकन्यां ददौ यद्यपि महाराजोदयसिंहस्तदानीं न मेवाडाधिपतिरासीत्किंतु बनबीरनामा दासीपुत्रस्तथापि स सत्यप्रियः शोणीगुरुः स्वकन्यामुदयसिंहायैव ददौ. असाहाय्ययच्च तं पुनरपि स्वसिंहासनसंपादने. झालावाडरावश्च तस्मिन्विवाहोत्सवेऽगणितं धनं तस्मै ददौ.

---

## ( २ )

सा च कन्या महाराजोदयसिंहेन समं संसारयात्रां कुर्वन्ती महान्तं कालमयापयत्. यद्यपि महाराजोदयसिंहस्य बह्व्यः पत्न्य आसन्, तथापि इयं प्रतापसिंहजननी पतिव्रता निर्विशेषमसेवत. वाचकाः! यद्यपि पातिव्रत्ये तु समस्तभारतललना जगतीतलवासिस्त्रीगणं समतीत्य वर्तन्ते तथापि राजस्थानरमण्यो निःसंशयमस्मिन्विषय आदर्शरूपा एव. यावच्चन्द्रदिवाकरमेष तासां

यशोदुन्दुभिः सर्वत्र स्वनादं कुर्यादेव. अस्तु. एवं क्रमेण काले गच्छति सा कन्यका भारतवासिनां सुदैवतो दिव्यं गर्भं बभार. दुर्मदयवनभारमसहमानाया वसुंधराया विज्ञप्तिं निशम्य साक्षाच्छंकर एव तस्या शोणीगुरोः कन्याया उदरे परमपवित्र उवासेति मन्ये. तदानीं च सर्वेऽपि यवना यथेच्छं वर्तमाना देवालयानि ध्वंसयन्त आर्यमहिला दासीः कुर्वन्तः स्वराज्यानि आत्मसाद्विदधतः सुतरामसह्या अभवन्. तेन पीडिता जनाः परमात्मानं स्वपीडापरिहारार्थं प्रार्थयन्त. सर्वेऽपि भूभारावताराय शंकरः स्वयमवतरिष्यतीति भक्ता जना अमन्यन्त. अस्तु.

अथ स दिव्यो गर्भः क्रमेण वर्धमानोऽलौकिकीं लावण्यश्रियमपुष्यत्. तदानीं च तस्या गर्भिण्या मुखमण्डलं दिव्यतेजोमण्डलालंकृतं प्राभातिकरविमण्डलसाम्यं दधौ. दोहदा अपि अग्रिममहाराजप्रतापसिंहचेष्टितसदृशा एवाजायन्त. मातुः प्रसिद्ध झालावंशसंभूतत्वेन पितुश्च संग्रामसिंहापत्यत्वेन तयोर्गर्भोऽपि तद्गुणशाली बभूवेत्यत्र नाश्चर्यं. उदयसिंहोऽपि प्रीत्या स्वकान्ताया दोहदानपूरयत्. साऽपि दोहदैः सर्वानपि प्रजाजनानानन्दयत्.

अथ परिपूर्णेषु मासेषु सा शोणीगुरोः कन्यका उदयसिंहस्य पत्नी प्राचीवान्धकारनाशकं सूर्यमिवातितेजस्विनं विशालभालपट्टसूचितभाग्यं, कमलदीर्घनयनं, शुकचंचूनासिकं, बलिष्ठं, मांसलसर्वावयवं बालकं प्रासूत. तदानीं च सूतिकागृहललना तेजोमण्डलेन प्रतिहतनयनप्रवृत्तयस्तं बालकं द्रष्टुमपि न शेकुः. राजोदयसिंहोऽपि पुत्रलाभसंजातानन्दः प्रमोदमग्नानां स्वप्रजाजनानां संतोषार्थं नाना पारितोषिकाणि वितितार. एकादशेऽहनि तदीय-

दिव्यशरीरसंपत्या संभावितप्रतापस्तस्य बालकस्य नाम ‘ प्रताप ’ इत्येव चक्रे. सोऽपि बालकः पित्रा स्थापितं स्वनामान्वर्थं चक्रे. विरलास्ते ये पितृभ्यां यदृच्छया स्थापितं स्वनाम स्वकर्मभिः सफलीकुर्वन्ति. अस्तु. स च बालकः प्रतिदिनं क्रमेण वर्धमानः सर्वानपि चितोडनराधीशाश्रितान् जनानतोषयत्. सामुद्रिका अपि तस्य मुद्रां निरीक्ष्य निःसंशयमयं प्रतापशाली भवेदिति कथयामासुः. ज्योतिर्विदश्च जन्मकालस्थितानुच्चग्रहानवलोक्यायं पुण्यश्लोकः सर्वमपि सिसोदियाकुलं समुज्वलयिष्यतीत्यवदन्.

---

( ३ )

यदा त्वस्मच्चरित्रनायकः पंचवर्षोऽभूत्तदाप्रभृत्येव स क्षत्रियकुलोचितं शिक्षणमलभत. यद्यप्युदयसिंहस्याऽन्येऽपि बहवः पुत्रा आसंस्तथापि तेषु सर्वेषु अपि प्रतापसिंहो विशेषेण सर्वासु तारासु शुक्रतारकेवाचकात्. तदानीं लेखनवाचनप्रधानं साम्प्रतिकमिव शिक्षणं प्रधानं नासीत्, किंतु क्षत्रियकर्तव्यनिर्वाहक्षमं. तद्यथाऽश्वारोहित्वं, लक्ष्यवेधित्वं, खड्गप्रहारकौशलं, भल्लनिक्षेपचातुर्यं, प्रतिस्पर्धिप्रहारविफलीकरणमित्यादि. श्रीप्रतापसिंहश्च निसर्गतएव बुद्धिमान् आभिः कलाभिः शाणोल्लिखितो मणिरिव नितरां प्राकाश्यत. यथैव शस्त्रास्त्रविद्यायां विचक्षणः सोऽभवत्तथैव मल्लविद्यायामपि. तेन सोऽलौकिकं तेजो बभार. प्रतापसिंहश्चैतादृक् बलवानासीद्यत्स समवयस्केषु सहोदरेषु द्वित्रानपि कुमारान्द्वन्द्वयुद्धेऽत्यक्रमत. तेन लीलया वृक्षे निखातं भल्लमाकृष्योद्धर्तुं द्वित्रा अपि बलिष्ठा मल्ला न शेकुः. लीलयैव प्रजविनमश्वमारुह्य चलानपि विहगानेकेनैव बाणेन भूमितलेऽपातयत्. स्वल्पेनाऽपि खड्ग-

प्रहारेण दर्भांकुरानिव कदलीस्तंभानिव लोहखण्डान्लुलाव. दृढैर्मुष्टिबन्धप्रहारैः पाषाणानपि चूर्णीचकार. किंबहुना—सामान्यतस्तदानींतनाः सर्वेऽपि क्षत्रियवीरास्तस्य बलं शस्त्रप्रहारकौशलं घोटकारोहकौशलं वीक्ष्य सुतरां व्यस्मयन्त. एवं क्षत्रियजात्युचितां शिक्षामादायासमां श्रियं पुपोष प्रतापसिंहः.

वाचकाः ! इदं खलु बाह्यं शिक्षणं. तच्चान्तःकरणसंस्कारकं न भवति. विनाऽन्तःशिक्षणं तत्खलु न स्वकार्याय प्रकल्पते. अन्यथा मानवाधिकबलशाली वन्यो मातंगः कथं खलु स्वल्पबलेनाऽपि मनुजेन स्वदासीक्रियते ! कथं चातिक्रूरा अपि सिंहव्याघ्रादयोऽरण्यचराः पशवः क्षुद्रबलेन नरेण बिडालाइव क्रीडांगणे शिक्ष्यन्ते ? तस्माच्छारीरशिक्षणमपेक्ष्य प्रबलं खलु बौद्धं शिक्षणं. तच्च कथमलभत प्रतापसिंह इति वयं क्रमेण पश्यामः—

सर्वत्र हि बौद्धिकशिक्षणस्य प्रधानं कारणं परिस्थितिरेव. परिस्थितिश्च भिन्ना भिन्ना प्रतिसमयं मानवबुद्धिं संस्करोति. योऽहि परिस्थितिं सम्यङ्निरीक्षते सोऽवश्यं सुशिक्षितमना भवति. प्रतापसिंहश्च जात्यैव तैक्ष्णबुद्धिः स्वदेशस्य तथा स्वजातीयानामवनतिं वीक्ष्य खिन्नमना मातृभूमिं स्वातंत्र्यमुकुटालंकृतां विधातुं निश्चयमकरोत्.

श्रीप्रतापसिंहस्य बौद्धिकं शिक्षणं बन्दिजनगीतैः प्राचीनपुण्यश्लोकनृपगणचरितैरेव कृतं. राजस्थाने च सर्वत्र प्रशंसनीया रीतिर्दृश्यते—यत्—तत्रत्याः सर्वेऽपि बन्दिजनाः पुण्ययशसां सिसोदियावंशसंभवानां राज्ञां चरितानि काव्यमयानि विधाय गायन्ति. तेन च साधारणा जना अपि कृत्स्नं पूर्वजानामितिहासमवगच्छन्ति. श्रीप्रतापसिंहश्च रात्रिंदिवं पराक्रमशालिनां पूर्व-

जनां शौर्यस्वातंत्र्यमयमितिहासं शृण्वन्सकलमेवाडमेदिन्या राजस्थानस्वातंत्र्यदेव्या वा मुकुटायितं चितोडदुर्गं परकीयैर्यवनैराक्रान्तं पश्यन्नितरामखिद्यत. परममान्यस्य श्रीरामचन्द्रजन्मपरिपूतस्य सूर्यवंशस्यांशजमात्मानं निशम्य यवनपारतंत्र्यमग्नमवलोक्य सुतरामदुःखायत. स्वातंत्र्यप्रियाणामार्यक्षत्रियाणां कीर्तिधवलं विविधपराक्रमकार्यमण्डितमितिहासं समाकर्ण्य दिल्लीपतिसेवोत्सुकान्स्वकीयानवेक्ष्य नितरामतपत्. स्वपावित्र्यरक्षणार्थं वैश्वानरमाश्रिताः स्वकुलांगनाः श्रुत्वा साम्प्रतं स्वसंबन्धिभिः केवलमैहिकसौख्यलाभाय यवनेभ्यो वितीर्णाः कन्या अवलोक्यात्यन्तं संतप्तोऽभवत्.

प्रतापसिंहश्च स्वदुर्दशावलोकनखिन्नमना बाल्य एव सर्वत्र मेवाडदेशे पर्यटन् सकलानि दुर्गमानि स्थानानि पश्यन् अतिसरलमतीन् स्वामिभक्तान् वनेचरान् स्वसखान् व्यधात्. स्थाने स्थाने शत्रुप्रतिक्रियासमर्थान् सामन्तान् स्वमतवर्तिनोऽकरोत्.

श्रीप्रतापसिंहश्च बाप्पारावळपराक्रमान् स्मरंस्तत्पूजितमेकलिंगमहादेवं परमादरेणापूजयत्. यद्यपि स स्वपितरमुदयसिंहमादरेणापश्यत्तथापि तस्य कर्मण्यकौशलं वीक्ष्य दुःखायतेस्म. अवदच्च सर्वानपि सामन्तान् यदि संग्रामसिंहवत्सर्वेऽपि क्षत्रियाः स्वकर्तव्येऽनलसा अभविष्यंस्तदा यवनाश्रितोडदुर्गं नाजेष्यन्. मेवाडमेदिन्यपि न परतंत्राऽभविष्यत् इति.

स प्रतिदिनं यवनानां वर्धमानमैश्वर्यं विलोक्य खिन्नो यथाशक्ति तेषां नाशाय स्वस्वातंत्र्यरक्षणाय च शपथमकरोत्. अन्यानपि तथाकरणाय विज्ञापयामास.

एवं मानसिकशारीरिकशिक्षण लब्ध्वा स वीरः प्रतापसिंहो ग्रीष्मसमये प्राभातिकः सूर्यइवोग्रं तेजो बभार.

---

( ४ )

महाराजोदयसिंहस्य शक्तिसिंहो नाम अन्यएकः पुत्र आसीत्. सोऽपि प्रकृत्या साहसिकः शौर्येणाऽपि अद्वितीयः परन्तु कर्तव्याकर्तव्यविवेकचतुरो नासीत्. स प्रतापसिंहस्य सन्मानं वीक्ष्या सूयान्वितो बालोऽपि असूयां बबन्ध. तस्य स्वभावं वीक्ष्य खिन्नो महाराजोदयसिंहोऽपि तस्मिन्प्रीतिं नाकरोत्. जातमात्रस्यैव तस्य शक्तिसिंहस्य मेवाडमेदिनीस्वातंत्र्यघातकान्ग्रहान्वीक्ष्य चिन्तातुरः स महाराजोदयसिंहस्तस्मिन्वैराग्येणैवावर्तत.

एकदा प्रभातकाले राजशिल्पिभिर्विरचितं सभायामानीतं खड्गं परीक्षितुमुदयसिंहः सामन्तैः समं सिंहासनमध्यतिष्ठत्. तदा सेवकैरानीते तन्तुसंघाते खड्गप्रहारं कृत्वा धारापरीक्षायां क्रियमाणायां सत्यां शक्तिसिंहः स्वयं विचारयतिस्म—यः खलु-खड्गः समरे शत्रुकण्ठनालच्छेदनाय ग्राह्यस्तस्य परीक्षा तन्तुसंघाते कथं स्यादिति. विचार्य चेत्थं स सहसाऽग्रे गत्वा तेन खड्गेन स्वांगुलिमच्छिनत्. प्रावर्तत च्छिन्नाया अंगुलेः सकाशादतितीव्रो रुधिरप्रवाहः. महाराजोदयसिंहश्च तस्येदं साहसं विलोक्य विस्मितः क्रुद्धः समीपवर्तिनं सामन्तं तस्य शक्तिसिंहस्य शिरश्च्छेतुमादिदेश. तामिमामाज्ञां विचित्रां निशम्य मिलिताः सर्वे सामन्ताः कोपरक्तनयनं तं महाराजोदयसिंहं सान्त्वयामासुः. सोऽपि पुत्रवधपातकं परिहरन् आग्रहं तत्याज. परन्तु शक्तिसिंहस्य साहसैकप्रियां मतिमवलोक्य नितान्तं खिन्नो बभूव.

# ७ सिंहासनाधिरोहणम्.

१ उदयसिंहस्यकुकृत्यम्.
२ सिंहासनाधिरोहणम्.
३ मृगया.
४ प्रतापसिंहशक्तिसिंहयोःकलहः.
५ पुरोहितस्य देहत्यागः, शक्तिसिंहस्य देशनिर्वासनं.
६ भीष्मप्रतिज्ञा.

( १ )



महाराजोदयसिंहश्च चितोडवियोगेन वा स्वातंत्र्यनाशेन वा पराजयदुःखेन वा वार्धक्येन वा क्षीयमाणबलः स्वस्य स्वर्गगमनं समीपमागतमिति निरचिनोत्. यद्यपि स चितोडदुर्गे गते सत्यपि यवनानां सामन्ततां नाभजत तथापि सकलमान्यानां पुण्यश्लोकानां बाप्पारावळसंग्रामसिंहादिभूपालानामन्वये संभूयापयशोमलिनं मुखं मे संवृत्तमिति चिन्तैव तमधिकमपीडयत्. तेन च क्षीणायुर्महाराजोदयसिंहो गोगुंडानाम्नि ग्रामे स्वर्गवासी बभूव. तत्पूर्वं स सर्वानपि स्वसामन्तानेकत्रीकृत्य

सर्वां राज्यव्यवस्थां कथयित्वा मम सिंहासनं मदीयस्तनयो जयमल्लोऽलंकरोत्विति जगाद च. तादृशीमाज्ञामनुसृत्य जगमल्ल एव मेदिनीपतिर्भविष्यतीति मन्वानः श्रीप्रतापसिंहो निराशो राज्यलाभे स्वभाग्यं परीक्षितुं देशान्तरं गन्तुं मनश्चक्रे.

वाचकाः ! महाराजोदयसिंहस्येदं कर्म न न्याय्यमासीत्. यतो यदा खलु निभृतं श्रावकस्य गृहे महाराजोदयसिंहोऽवर्धत तदानीमेव शोणिगुरुः स्वकन्यां तस्मै ददौ. तस्मिन्नेव समये स उदयसिंहः स्वश्यालाय झालावाडगावनाम्ने सामन्ताय 'अस्यां कन्यायां यः पुत्रोभवेत्तमेवाहं राज्याधिकारिणं करिष्यामि' इति प्रतिजज्ञे. न्यायतोऽपि स एव जेष्ठदेव्याः पुत्र आसीत्तदेतत्सर्वमपि अगणयित्वाऽन्तसमये जयमल्ल एव मम पश्चाद्राज्याधिकारी करणीय इति कथयामास. यस्मिन्कुले बहवः सत्यप्रतिज्ञा राजानोऽजायन्त, यच्च कुलं भगवतः सत्यवचनस्य श्रीरामचन्द्रस्य सूर्यवंशादुद्भूतं तत्र पवित्रे सिसोदियावंशे जनित्वा महाराजोदयसिंहः स्ववचनं मिथ्याचकार. सज्जनाः ! वचनभंगो हि यवनानामेव शोभते न क्षत्रियाणां. क्षत्रियाश्च स्वासूनपि अगणयन्तः प्रतिज्ञां पालयन्ति. अस्तु.

राजस्थाने चायं नियमो यदि कश्चन राजा स्वर्गं गच्छेत्तदा तस्य प्रेतं तत्रैव निक्षिप्य प्रथमतो महतोत्सवेन तत्पुत्रं राजासनेऽभिषिच्य पश्चात्तस्य मृतस्य राज्ञः शवसंस्कारो करणीय इति. एतादृशाऽलौकिकनियमे बीजमपि—' रिक्तं राजसिंहासनं प्रेक्ष्य कदाचित्प्रजासु कलहःस्यात्. कश्चनान्य एव राजाऽस्मिन्समये राज्यमाक्रमेत. कश्चन स्वकीय एव राजसिंहासनमात्मसात्कृत्य सर्वेषामपि प्रजाजनानां स्वातंत्र्यमपहरेदित्यादिकं स्पष्टमेव.

( २ )

एतन्नियमानुरोधेन सर्वे सामन्तास्तथाऽन्येऽपि प्रमुखा नागरिका जना राजसभामागता जयमल्लाभिषेकार्थं प्रायतन्त. सोऽपि अज्ञातविशेषवृत्तो मंगलाभिषेकार्थं स्नानादिकं विधाय राजसभामाजगाम.

अत्रान्तरे कृष्णरावतो ग्वाल्हेरनरेशोऽन्ये मंत्रिगणाश्च सहसा तत्सभास्थानमागत्य तं जयमल्लमवदन्—राजकुमार? त्वदीयः पिता महाराजोदयसिंहो यदा सोनीगडाधिपस्य कन्यां परिणिनाय तदा तदीयं पुत्रमेव सिंहासनाधिकारिणं विधातुं वचनं ददौ. तच्च कथं खलु विस्मृतवानिति न जानीमहे. यद्यपि त्वां राज्ये स्थापयितुमस्मान्महाराज उदयसिंह आज्ञापयत्परन्तु तस्य ज्येष्ठत्वेन स एव संप्रति राज्याधिकारी भवितुमर्हति. यस्मिन्वंशे रामचन्द्रः खलु पितुराज्ञया राज्यं विहाय वनवासी बभूव तेनैव वंशेनाऽयमपि परमपवित्रः सिसोदियावंशः संबद्ध एव. तत्त्वमपि भरतमनुकुर्वन्स्वजेष्ठबन्धुं प्रतापसिंहं राज्ये स्थापयितुमग्रेसरो भव. पितुः प्रतिज्ञापालनेन प्रापय तमपि महाभागं पितरं सद्गतिं. अर्जय च त्वमपि यावच्चन्द्रदिवाकरं स्थायि पार्वणचन्द्रमरीचिरोचिर्यश इति.

सोऽपि पितृतुल्यानां वृद्धानां प्रधानामात्यानां तथा तातमित्राणां राज्ञामाज्ञामंगीकृत्य प्रतापसिंहस्य राज्याभिषेकविधानेऽनुमतिं ददौ.

वाचकाः? ये खलु जीवन्तं पितरं निहत्यैव राज्यलाभार्थं स्वबन्धुभिः कलहायन्ते. अथवा कूटैरुपायैः स्वजनकमपि यमालयातिथिं विधाय राज्यमाक्राम्यन्ति. ते दुर्निवारराज्यलोभाक्रान्ता

यवनाः क,—क च केवलं पितृवचनपालनार्थं कृत्स्नमपि स्वविषयसुखं विहाय राज्यलोभमपि विनाशयन्तस्तादृशा जगमल्लप्रभृतयः पुरुषश्रेष्ठाः. यद्यपि सम्प्रति न सन्ति ते रजपूतक्षत्रियश्रेष्ठा नापि यवनाः परन्तु यावदयमितिहासोवर्तते तावत्सरलमना मानवस्तान्क्षत्रियश्रेष्ठांस्तुयाद्यवनांश्च निन्देदेव. सज्जनाः? यथा भीष्मस्य स्वपितृसन्तोषार्थमाजन्मब्रह्मचर्यं, यथा वा जानकीजानेररण्यवासस्तथैव जगमल्लस्येयं पितृदेवतापरिपूजा. वयं तु ब्रूमः— पितृवचनपालनार्थं राज्यमुत्सृजता जयमल्लेन मेवाडमेदिनीसिंहासनादपि लोकोत्तरं सिंहासनमर्जितं. यत्कोऽपि न ग्रहीतुं शक्नोति. अस्तु.

अस्मिन्विषये जयमल्लस्य सम्मतिमवलोक्य ते सर्वेऽपि मंत्रिणः सामन्ताश्च तं प्रशंसन्तो महताऽनन्देन महाराजं प्रतापसिंहं राज्याभिषेकार्थं विज्ञापयितुं प्रतापसिंहस्य प्रासादमयुः. सोऽपि अकस्मादेव समागतं मंत्रिगणं तथा सामन्तगणं विलोक्य विस्मितः सर्वं वृत्तं तेभ्यः श्रुत्वा जयमल्लमाश्लिष्य सानन्दं राज्याभिषेकोत्सवविधानार्थमाज्ञापयामास.

अचिरादेव सर्वोऽपि नागरिकजनो मिलित्वा सर्वं नगरं संचस्कार. स्थाने स्थाने नागरिकललना मिलित्वाऽगायन्. प्रतिचतुष्कं च मंजुलध्वनिभिर्गायनालापैः समं पटहा अध्वनन्. राजपुरुषैरधिष्ठिता जलसेकशमितधूलयो राजमार्गाः चित्राकारैर्जनैर्व्यरेजुः. नूतनाय राज्ञे नमस्कर्तुं सादिमंडलं स्वाधिकारिणा समं राजप्रासादांगणमलमकरोत्. पदातिदलमपि स्वमुख्येन समं नियतं स्थलमाजगाम. सर्वे सामन्तगणा अपि स्वस्वयोग्यताचिन्हानि धारय-

न्तो नियतेषु राजसभास्थानेषु नृपतेरागमनं प्रतिपालयन्त उपविविशुः.

नियते मुहूर्ते प्रतापसिंहोऽपि कृताभ्यंगस्नानो मंगलान्मौक्तिकहीरकमयानलंकारान्धृत्वा पीतवस्त्रधारी शुभलक्षणमश्वमारुह्य बन्दिजनोच्चारितजयः कनकयष्टिधारिभिः प्रतिहारिभिः परिवेष्टितः सम्यङ्नेपथ्येन सैन्येनानुगम्यमानोऽग्रे नदन्मंगलवाद्यकलापः स्थाने स्थाने राजदर्शनानन्दिभिः प्रजाजनैरभिवन्दितः शनैः शनैः राजप्रासादान्निर्गत्य राजसभास्थानमाययौ. तदानीं च सर्वैरपि मुख्यमात्यैः समं मुख्यैः सामन्तैरग्रे गत्वा नमस्कृत्य सादरं सभास्थानमानीय मुख्ये स्थाने समुपवेशित उपविवेश. तदा तु भूमिगत इन्द्र इव प्रतापसिंहो रराज.

शुभवेलायां बाप्पारावळप्रभृतिभिः राजर्षिभिः पवित्रीकृते मेवाडमेदिनीसिंहासनेऽभिषिक्तः सर्वैरपि तीर्थोदकैर्बृहस्पतिसमैर्विप्रगणैः शिरसि प्रोक्षितः संस्कृतो मणिरिव ग्रीष्मसूर्यइव सुतरां प्रभाशाली बभूव. समाप्ते च वैदिकविधौ सर्वे सामन्तास्तं नमस्कृत्योपायनानि व्यतरन्.

अथ परमविश्वासपात्रं मौलः प्रधानामात्य उत्थायाब्रवीत्—भो सामन्ताः? तत्रभवान्महाराजोदयसिंह इमं मर्त्यलोकं विहाय स्वर्गं लोकं जगाम. यद्यपि स पश्चाद्राज्याधिकारिणं जयमल्लं कुरुतेत्याज्ञापयत्तथापि महाराजोदयसिंहस्य वचनभंगो माभूदिति पश्यता जयमल्लेनैवाज्ञप्ता महाराजं प्रतापसिंहं मेवाडाधिपतिं कुर्मः. तद्यथा सर्वेऽप्यस्मत्पूर्वजाः पुण्यश्लोकं मेवाडमेदिनीपतिमाश्रित्योत्कर्षं प्रापुस्तथैव वयमपि महाराजप्रतापसिंहमाश्रित्योत्कर्षं लप्स्यामह इति निश्चितकल्पमेव. यथाचास्मत्पूर्वजा मेवाडाधिपं

प्रति राजनिष्ठयाऽवर्तन्त तथैव वयमपि वर्तिष्यामह इति उक्त्वाचेत्थं स्वयं सिंहासनं स्पृष्ट्वा शपथमकरोत्तथैव सर्वेऽपि सामन्ताः.

सर्वेषु सामन्तेषु शपथं कृत्वा स्वस्वस्थानेषु समुपविष्टेषु सत्सु महाराजः प्रतापसिंहः स्वपूर्वजान्मनसिकृत्वोच्चैरिदमभाषत.

सामन्ताः ? प्रधानामात्याः ? प्रियप्रजाजनाः ? अद्य खलु अहं परमेश्वरकृपया मम पूर्वजानामाज्ञया परमपवित्रे सिंहासने समुपविष्टः. अहं तु यावज्जानाम्यत्र न केवलं विलासार्थं विषयोपभोगार्थं वा परमात्मना संनिवेशितः किंतु कर्तव्यपालनार्थं. राज्ञः कर्तव्यं हि पुत्रवत्प्रजानां पालनं. तदपि द्विधा, बाह्यशत्रुभ्यस्तथा दारिद्र्याद्युपद्रवादिभ्यः. सम्प्रति हि प्रबलो दिल्लीपतिर्यवनोऽस्मद्धर्मविरुद्धधर्मा मेवाडमेदिनीमाक्रन्तुमिच्छति. जीवत्सु तातपादेषु मेवाडमेदिन्या मुकुटमिव स्वातंत्र्यदेव्या निवासमिव भारतललनापातिव्रत्यस्य साक्षिणमिव चितोडदुर्गमात्मसादकरोत्. तत्प्रथमतो यावच्छक्ति अयं यवनराजः पराजेयस्ततः स्वराज्यं व्यवस्थापयिष्यामः. राज्ञश्च यथा प्रजापालनं कर्तव्यं कर्म तथैव प्रजानामपि राजाज्ञापरिपालनमेव. यो हि राजा प्रजाभ्यः स्वात्मानमतिरिक्तं मन्यते स न विजयते. नापि प्रजाश्च तथैव मन्यमानाः. यत्र च राजाऽऽत्मानं प्रजाभ्यो नातिरिक्तं मन्वानस्तासां श्रेयसे प्रयतते तत्रैव सर्वाः सम्पदो निवसन्ति. परस्परविश्वासप्राकाररक्षिते राज्येऽतिबलाढ्योऽपि शत्रुः प्रवेष्टुं न शक्नोति. तद्वयमपि परस्परानुरागशालिनस्तं दिल्लीश्वरं यवनाधिपतिं जेतुं प्रयतिष्यामहे. अचिरादेव भगवानेकलिंगः सर्वेषां नो मनोरथान् सफलीकरिष्यतीति.

श्रीमहाराजप्रतापसिंहस्येदमोजस्वि पराक्रमपरिपूर्णं भाषणं

निशम्य सन्तुष्टाः सर्वे मेवाडमेदिनीनिवासिन उच्चैर्जयघोषमकुर्वन्. सर्वे सामन्ता अपि स्फुरद्बाहवो युद्धमदमत्ता एवाभवन्. स्वकर्तव्यदक्षस्य राज्ञो लाभेन रिपुहस्तगतं चितोडदुर्गं प्राप्तमेव मन्यमाना ईश्वरमस्तुवन्. ततश्च सामन्तानीतान्युपायनानि स्वीकृत्य श्रीमहाराजप्रतापसिंहः स्वस्थानमगात्.

---

## ३

तस्मिन्नेव समये ते सर्वेऽपि सामन्ताः समं नूतनाभिषिक्तेन प्रतापसिंहेन शुभाशुभकालज्ञानार्थं मृगयाविधायनाय वनमगच्छन्. अचिरादेव ते श्रीमहाराजप्रतापसिंहस्याभिषेकोत्सवं द्रष्टुं समागतेनेव वसन्तेन विकचसुरभिकुसुमनिवहैः समलंकृतवृक्षं, कुसुमितवनलतानववधूविभ्रमैर्दर्शनीयं, अतिमंजुलध्वनिप्रवहन्निर्झरसहस्रभूषितं, शाद्वलनिषण्णप्रारब्धरोमन्थहरिणयूथरुचिरं, कोपारक्तनयनवन्यमाहिषयुद्धभयंकरं, ईषत्कुटिलपलाशकुड्मलाच्छादितं, व्याघ्रानुधावनभीतपलायितमृगयूथाग्रेसरनयनलहरीमनोहरं, निर्निद्रचंपककुसुमगुच्छपरागमिश्रमन्दवातसुरभि, सततनिपतत्पुष्पगणाच्छादितभूतलबकुलवीथिकासनाथं, अत्युच्चस्थलनिषण्णमृगराजं, अरवलीपर्वतमध्यवर्ति महावनं प्रविश्य मृगयामारभन्त.

अथ क्षणादेवारण्यरोधकवनेचरगणघोरारावव्याकुलं, निर्निद्रव्याघ्रभयंकरनादश्रवणव्याकुलधावमानवन्यपशुयूथं, यथेच्छप्रधावद्घोषकपालितसूकरगणप्रहारजर्जरितवृक्षं, पल्वलपंकोत्थवन्यमाहिषशृंगाघातसाबाधतटं, मदोन्मत्तगजक्रमणचूर्णितक्षुद्रशशकं, साटोपावस्थितसिंहाक्रान्तकृष्णसारव्याकुलमृगीगणं, तद्वनमन्यदेवाभवत्.

सामन्ताश्च सत्वरमेव तद्वनं प्रविश्य भल्लनिक्षेपेण वन्यकरिणं, तीक्ष्णेन खड्गप्रहारेण व्याघ्रं, वेगेन धावमानं कृष्णसारं बाणेन, निहत्य स्वस्य शस्त्रप्रहारकौशलं प्रदर्शयामासुः. रजपूतक्षत्रियाश्चाश्वमारुह्य महता वेगेन धावमाना लोकोत्तरमश्वारोहणकौशलं प्रकटीचक्रुः. एकेनैव खड्गप्रहारेण वनलुलायं द्विधाकुर्वन्तः खड्गप्रहारपाटवं निदर्शयांचक्रुः. तीव्रसंतापेन मुखं समुद्घाट्याभिमुखमागच्छतो व्याघ्रस्य मुखं बाणसंचयपूरेण तूणीरतांयापयामासुः. तीक्ष्णबाणैः पश्चाद्वृक्षप्रोतजानूनां चलितुमसमर्थानां सूकराणां व्यर्थं क्रोधावेशं वीक्ष्योच्चैर्जहसुः. सर्वेषु वनमृगेषु क्रूरानश्वह्रेषारवानाकर्ण्य पलायमानेषु सक्रोधं सधैर्यं स्थित्वा सर्वानप्यवलोकमानानां सिंहानामवलोकनमभिननन्दुः. प्रशशंसुश्च तेषां पराक्रमम्.

---

४

एवं सर्वेषु सामन्तेषु रजपूतक्षत्रियेषु समं राज्ञा प्रतापसिंहेन मृगयाविनोदं कुर्वत्सु सत्सु अकस्मात्प्रतापसिंहस्य पुरतः कंटकलतागुल्मात् तीक्ष्णदंष्ट्रः, घोरारावचालितसकलारण्यः, क्रोधोन्नतसटापटलः, तीक्ष्णाग्रदन्तप्रहारविभिन्नानेकवृक्षगणः, पल्वलपंकमलिनपरिपुष्टशरीरयष्टिः, अतिभयंकरवेगशाली सूकरराजः प्रादुरासीत्. तं चाकस्मान्निर्गतं वीक्ष्य सर्वेऽपि क्षत्रियाः क्षणमात्रं स्तब्धा इवाभवन्. अन्ये च क्षुद्रा हरिणादयो वनपशवस्तस्य घोरां घोषणामाकर्ण्य क्वापि पलाय्य दरीषु न्यलीयन्त. अश्वाश्च भयाकुला दीर्घान् ह्रेषारवान्विससर्जुः.

अत्रान्तरे तं सूकरराजं हन्तुकामः श्रीमहाराजप्रतापसिंहस्त

मनुसृत्य धावितुमश्वमचोदयत्. साहसप्रियः शक्तिसिंहोऽपि स्वाश्वं. तौ च स्वासुहरणाय धावमानौ वीराववलोक्य भीतिग्रस्तमनाः सूकरोऽतिवेगेन पलायतेस्म. तौ च प्रजविनं धावमानं सूकरराजमनुजग्मतुः. स च सूकरराजः प्रकृतिबलिष्ठो महतः पर्वतखण्डशिलोच्चयान्नुड्डीय गच्छन्कदाचिद्दृश्यः कदाचिद्दृश्यः कदाचिल्लतानिकुंजेषु निलीनः,कदाचिज्जलपरिपूर्णेषु पल्वलेषु निमग्नः सर्वत्राधावत. तावपि तथैव धावमानौ तं न मुमुचतुः.

अथ दूरधावनफेनिलमुखं, श्वासाधिक्यविदीर्णवदनं, निर्बलतयेतस्ततोनिपतच्छरीरं, धावनासमर्थं, तं सूकरराजं वीक्ष्य तत् समावस्थावपि तौ महावीरौ युगपदेव तस्य प्राणहरणाय बाणावमुंचताम्. तौ बाणावपि अहमहमिकया तस्य लक्ष्यस्य प्राणहरणोद्यतौ स्वामिनाविव शीघ्रं गच्छन्तौ सममेव तस्य सूकरस्य शरीरं प्रविविशतुः. तस्मिन्नेव क्षणे स बलाढ्योऽपि सूकरराजो रुधिरार्द्रशरीरः कानिचित्पदानि गत्वा घूर्णयित्वा भूमितले पपात. तदीयाः प्राणा अपि स्वमरणशंकयेव दृढमपि तदीयं शरीरं विहायान्यत्रागच्छन्. स च त्वेषेण मरणसमये तीक्ष्णेन दन्ताग्रेण भूमिं खनन् धूलिमयं तत्स्थलं चक्रे. घोरेण प्राणगमनवेदनाभयंकरेण रवेण सकलमप्यरण्यं वाचालयामास. स्थूलशरीरपातेन भूमिमपि कंपयामास. क्रोधातिरेकविदीर्णमुखनिर्गतफेनपटलेन सकलमपि धरणीतलं धवलं चकार. बलिष्ठस्याऽपि मदोन्मत्तस्य कथं क्षणभंगुरं जीवितमिति सर्वेभ्योऽदर्शयत्.

तं च सूकरराजं स्वबाणविद्धं प्रणिपतन्तमवलोक्य सानन्दौ स्वपरिश्रमं सफलं मन्यमानौ तौ प्रतापसिंहशक्तिसिंहौ सजवमश्वाभ्यां धावन्तौ सममेव तत्रागच्छताम्. निरीक्ष्य च तं भूदारेश्वरं

बाणयुग्मनिहतं विस्मितौ कस्य बाणेनायं निहतइति निर्णेतुं व्यवदेताम्. प्रतापसिंहोऽवदत्—अहमेवेमं प्रथममपश्यम् बाणेनाहनं च. तस्मादयं सूकरो ममैवेति. साहसिकः शक्तिसिंहश्चेत्थमेव वदंस्तं सूकरं हातुं नैच्छत्. तौ च क्रमेण वर्धमानविवादौ क्रुद्धौ द्वंद्वयुद्धेन कस्य बाणेनायं पूर्वं निहत इति निर्णेतुमैच्छताम्. पश्चात्समागताः सामन्ता मंत्रिगणाश्च तौ स्वान्त्वयितुं प्रायतन्त परन्तु स्वलक्ष्यत्यागः क्षत्रियाणां महानपमान इति मन्यमानौ तौ न विवादविषयं तत्यजतुः.

---

## ( ५ )

अत्रान्तरे वशिष्ट इव तपस्वी महामान्यः श्रुतिशास्त्रविद्याकुशलः स्वयजमानकल्याणदक्षः, सिसोदियावंशजैः प्राचीनैर्भूपालैः सम्मानितः, कुलपुरोहितः सर्वेषु रजपूतक्षत्रियेषु सामन्तेषु स्तब्धेषु सत्सु सहसाऽग्रे गत्वा तौ नग्नासिलतालंकृतहस्तौ कोपारक्तनयनौ प्रतापसिंहशक्तिसिंहौ सावेशमवदत्.महाराजप्रतापसिंह!शक्तिसिंह! किमिदं भवद्भिः प्रारब्धं. क्षुद्रस्य वराहस्य कृते परस्परघातार्थमुद्यतौ युवां किं चितोडदुर्गं सूकरादपि हीनं मन्येथे? महाराजप्रतापसिंह! इदानीमेव त्वं पूज्यं पैतृकं सिंहासनमारूढः कथं स्वबन्धुघातेनात्मानं कलंकयितुमीहसे. शक्तिसिंह! त्वमपि पितृवद्वंद्यस्य स्वज्येष्ठबन्धोः प्रहरणेन परमपवित्रं सूर्यवंशं. दिवंगता महाराजबाप्पारावळप्रभृतयश्चितोडदुर्गं शत्रुहस्तगतं महाराजं प्रतापसिंहमुदयपुरवासिनं विलोक्य खिन्नाः साश्रुनयनाः क्षुद्रकारणेन कलहायमानौ युवां किं वदेयुः? अद्यापि स्वर्गवासिनो महाराजोदयसिंहस्य तिलोदकं न शुष्कं. तावतैव परस्परघातार्थमुद्यतासी युवां

वीक्ष्य मेवाडवासिनो वा भारतवासिनो जना अपहसेयुः. इयं मेवाडमेदिनी शत्रुभिर्बलादाक्रान्ता गौरिव वा भारतललनेव वा युष्मत्साहाय्यमपेक्षमाणा साम्प्रतं विपरीतवृत्ती युवां वीक्ष्य शोचति. एते सर्वेऽपि सामन्ताः किंकर्तव्यतामूढा आलिखिता इव विराजन्ते. तद्विरमतमस्मात्पापाचरणात्. इदं चितोडदुर्गं युवयोरकार्यमिदमवलोक्य खिन्नं निर्झरमिषेणाश्रुजलं क्षिपदुड्डीयमानबलाकापक्षचालनेन युवामस्मादनाचारान्निवर्तयति. एतौ च परमपवित्रौ सिसोदियाकुलसंभवौ युवयोर्देहौ शत्रुकण्ठनालनिर्गतरुधिरप्रवाहपंकिले समरांगणे पतितुमर्हौ क्षुद्रस्य सूकरस्य कृते त्यागेन माऽवमानयतम्. युष्माकं शत्रुर्दिल्लीपतिर्यवनोऽकबरोऽनेनगृहकलहेन संतुष्य मेवाडमेदिनीस्वातंत्र्यं माऽपहरतु. एष च पवित्रः सिसोदियावंशोऽनेन वृथाघातेन कलंकितो मा भवतु. यद्यहं युवयोः प्रमाणं, यदि च मेवाडमेदिनी युवयोः प्राणेभ्योऽपि गरीयसी, यदि चैष चितोडदुर्गो युवयोः प्रियः, यदि च मेवाडमेदिनीस्वातंत्र्यं निरतिशयप्रीत्यास्पदं तदा सर्वेषामेषां शपथेन युवामहमाज्ञापयामि सत्वरं युवाभ्यां स्वासिः कोशे स्थापनीय इति. इति.

कुलपुरोहितस्येदं तेजस्वि स्वामिनिष्ठामूलकं वचो निशम्य सर्वे सामन्ता आश्चर्येण स्तब्धा एवाभवन्. अन्ये च मृगयवो वनेचरा अपि तमस्तुवन् परन्तु कोपातिरेकप्रनष्टसदसद्विवेकबुद्धी स्वाग्रहत्यागेन स्वापमानं मन्यमानौ तौ प्रतापसिंहशक्तिसिंहावुभावपि न स्वाग्रहं मुमुचतुः. ऊचतुश्च तं पुरोहितं—गुरो! नायं युष्माकं विषयः. युष्माभिः क्षणमात्रमन्यत्र गन्तव्यं. क्षत्रियो हि प्राणेभ्योऽपि विद्धं लक्ष्यं गरीयो मनुते. येन यत्परि-

श्रमेणार्जितं तत्स एवोपभोक्तुमर्हति. तत्क्षुद्रं वा महार्घं वेत्यन्यदेतत्. सर्पो हि पीडयितारं दशति तन्न रक्तलाभार्थं किंतु वैरनिर्यातनार्थमेव. तदयं कलहः शस्त्रेणैव निवार्यो नतु वचनशतेनापीति.

स च कुलोपाध्यायो महातेजस्वी तदिदं तयोरपमानकारकं मदोन्मादप्रदर्शकं च प्रत्युत्तरं श्रुत्वा कोपारक्तनयनयुगलोऽग्निवर्षिण्या विकरालया दृशा तौ पश्यन्, दहन्निव, शापं दित्सन्निव, पादहतभूमितलः सरभसं बाहूद्यम्याक्रोशन्निव रोषातिरेकरुद्धेन घोरेण घोषेण बभाषे.

प्रतापसिंह! शक्तिसिंह? अहं चानेन युवयोः प्रत्युत्तरेण सविशेषमधिक्षिप्तोऽस्मि. योऽहं पवित्रसिसोदियाकुलसंभवान् विप्रादरतत्परान् महापराक्रमशालिनः स्वातंत्र्यदेवीकण्ठहारस्थूलहीरकानपश्यम् सोऽहं युष्मादृशोः कुलकलंकयोस्तिरस्कारवचनेनापमानितो जीवितुं नेच्छामि. राजस्थानभूमेश्चायं विशेषः—यत् तस्याः पुत्रः कदाऽपि कुतोऽपि तिरस्कारं प्राप्य न जीवति. स च प्राणेभ्योऽपि मानं गरीयांसं मन्यते. तत्स्वलक्ष्यसूकरलाभाय कलहामानयोर्युवयोर्मध्येऽयमपि ब्राह्मणदेहो लक्ष्यं भवतु. भगवति मेवाडमेदिनि! चिरात्खलु मम महत्याशाऽसीद्यत्पुनरपि दुर्मदयवनहस्तेभ्यस्त्वां मुक्तां पूर्ववत्क्षत्रियश्रेष्ठैः परिपालितां द्रक्ष्यामीति, सा तु मदीयदेहेनैव समं नष्टा. प्रभो एकलिंगेश्वर! किमित्थमेव त्वं मेवाडमेदिनीं पालयसि? भगवन् गोवर्धनोद्धारतत्पर! श्रीनाथ! त्वमपि किमिति तूष्णीमतिष्ठः? दुर्गराज! चितोड? अहं चाधुनेमं देहं त्यक्त्वा पुनरपि अस्मिन्नेव राजस्थाने जनित्वा तवोद्धारार्थं प्रयतमानानां क्षत्रियाणामवश्यं साहाय्यं करिष्यामि.

अन्ते च जगच्चालक? परमात्मन्? तुभ्यमहं प्रार्थयामि एतादृशौ कुलकलंकौ राजपुत्रौ पवित्रे सिसोदियाकुले मा जनयेति. इत्युक्त्वा च तीक्ष्णया च्छुरिकया गाढं हृदये प्रजहार. शस्त्रधाराया अतितैक्ष्ण्यात्तस्मिन्नेव क्षणे प्राभिन्नोरस्कः पवित्रस्तस्याग्रजन्मनो देहो धरणीतले पपात.

तं च प्रहारगतासुं धरणीतले निपतितमवलोक्य सर्वेऽपि सामन्ता दुःखाकुला अतिवेगेन धावमाना मस्तके जलं सिषिचुः. परन्तु गाढप्रहारेण तस्य जीवात्मा तं देहं विहाय परलोकमगादेव. अथ तौ ब्रह्महत्यापातकमलिनमात्मनंमन्यमानौ विरलीभवत्कोपातिरेकौ विवेकाक्रान्तमती स्वासिलतां कोशे चिक्षिपतुः. तदानीं च महाराजप्रतापसिंहो विप्रहत्यापातकेनातिदुःखाकुलस्तं विवादं विहाय महतोत्सवेन तस्य सात्विकस्य राजनिष्ठस्य गुरोः शवं वन्हिना संस्कृत्य तदीयपुत्रेभ्यो ग्रामादिकं ददौ. संभूतस्य विप्रहत्यापातकस्य परिहारार्थे महादानान्यकरोत्. अन्ते च सर्वविवादकारणं तं शक्तिसिंहमाहूय सर्वेषां सामन्तानां तथा मंत्रिणां पुरतो जगाद—शक्तिसिंह? यद्यप्यस्मिन्कर्मणि त्वमेवैकाकी नापराधी किं त्वहमपि. तथापि अस्या मेवाडमेदिन्याः पालकोऽयमिति मत्वा त्वयाऽग्रहस्त्यक्तव्य आसीत्. स च त्वया न त्यक्तस्तेनेदं महापातकं मम शिरसि निपतितं. अस्तु. अतःपरं तवावस्थानमत्राश्रेयस्करं मन्ये. तत्त्वमद्यैव यदिच्छसि तद्गृहीत्वा यत्रेच्छसि तत्र व्रज. अहं तु पुनरपि न त्वां द्रष्टुमिच्छामीति.

सोऽपि तेजस्वी साहसिको राजपुत्रः शक्तिसिंहस्तस्य स्वज्येष्ठबन्धोराज्ञां शिरसा प्रमाणीकृत्य तस्मिन्नेव क्षणे केवलमश्वमेव

गृहीत्वा तं महाराजं प्रतापसिंहं नमस्कृत्य निर्गतो दिल्लीनगरमागत्याकबरं ननाम.

सोऽपि च्छिद्रान्वेषी तं सन्मानेन सत्कृत्य स्वसभायां स्थापयामास.

## ( ६ )

यदा च प्रतापसिंहः सिंहासनमलमकरोत्तदा तस्य कोशे द्रव्यं नासीत्. यथाकथंचित्सर्वे राजसेवका वेतनं लब्ध्वा राजकार्यमकुर्वन्. विशेषतश्च ये खलु सम्पन्ना मेवाडभूमेर्विभागास्तानकबरः पूर्वमेवापाहरत्. तेन राज्यस्यायोऽपि न्यूनीबभूव. तथापि प्रतापसिंहो न निरुत्साहो बभूव. स हि मेने—पुनरपि चितोडदुर्गविजये नास्ति तावती द्रव्यस्यापेक्षा यावती मानवानां. ते च राजस्थानेऽतिविपुलाः. मां च चितोडाक्रमणार्थं समुद्यतमवलोक्य स्वपूर्वजवत्सर्वथा साहाय्ययिष्यन्ति. यद्यपि अकबरो मत्तो धनाढ्यो बलाढ्यश्च तथापि मदीयसेना तत्सेनापेक्षया श्रेष्ठैवेति निर्विवादं. तथा चाहं त्वरितमेव तं यवनाधिपं निर्जित्य मेवाडमेदिनीं पुनरपि स्वातंत्र्यसुखभाजं करिष्यामीति.

अवधार्य चैवं स सत्वरमेव स्वसेनां सन्नाहयामास. सर्वांश्च राजस्थानगतान् भूतपूर्वसुहृदो मान्यान् क्षत्रियराजान् साहाय्यार्थमाव्हयतेस्म. परन्तु नैव जानातिस्म जयपूरप्रभृतिराज्याधिपान् केवलं नाम्ना क्षत्रियान्. ते च तीव्रमतिनाऽकबरेण समं संधाय पूर्वं तत्सामन्ततां स्वीचक्रुः. ते तु चितोडाक्रमणे साहाय्यदानाय श्रीप्रतापसिंहेन प्रेषितमामंत्रणं निशम्य हसन्तः क्षुद्रास्तथाकरणाय विमुखा अभवन्. स हि अकबरो न केवलं बलाढ्यो धना-

ह्यश्चासीदपितु राजनीतिकुशलोऽपि. स हि स्वराज्यं स्थिरीकर्तुं प्रयतमानोऽतिशूराणां रजपूतक्षत्रियाणां साहाय्यमपैक्षत. प्रथमत एव ये खलु यवना दिल्लीपतयोऽभवंस्तेभ्यः सर्वेभ्य एव चितोडाधिपा अद्रुह्यन्नेव. तेन च तेषां नाशाय सर्वे एव परकीया राजानः प्रायतन्त. वर्धिष्णुर्नृपोऽपरस्माद्वर्धिष्णोर्बिभेतीति न्यायेन भारतवर्षेऽद्वितीयश्चक्रवर्ती भवितुमिच्छन्राजाऽकबरः सामदानाद्युपायोपयोगेन राजस्थानवासिनश्चितोडाधीशसहायानभिनत्. तेऽपि स्वपूर्वजपराक्रमान्विस्मृत्य तस्य धूर्तस्याकबरस्याज्ञाधारकाः श्वान इव सेवका अभवन्. स च क्रमेण—अंभेर, बीकानेर, बुन्दीप्रभृतिराज्याधिपान् स्वपक्षपातिनो व्यधात्. तेन महाराजप्रतापसिंहः शूरोऽपि सहायहीनो भग्नदन्तो हस्तीव चितोडदुर्गं स्वायत्तीकर्तुं नाशकत्.

एवं तदीयैः प्रधानसामन्तैर्वञ्चितोऽपि महाराजप्रतापसिंहो न धैर्यमजहात्. स त्ववदत्—अहं च पवित्रे सूर्यवंशे लब्धजन्मा केवलं क्षणिकस्यैहिकस्य सुखस्य कृते स्वकन्यां यवनाय समर्प्य तं कलंकयामि? तदपेक्षया च नरकवासमपि स्वीकरिष्यामि. सर्वे राजस्थानवासिनः क्षत्रियराजाः स्वकन्या यवनाधिपाय वा तत्सामंतेभ्यः समर्प्य यथेच्छं तद्दत्तानि राज्यानि भुंजानाः स्वकुलानि दूषयन्तु. अहं च स्वप्राणानप्यगणयन्सर्वदैव मेवाडमेदिनीस्वातंत्र्यं तथाऽर्यमहिलानां पावित्र्यं रक्षिष्यामि. अहं चास्मिन्विषये केवलं परमात्मानमेव साहाय्यविधानार्थं विज्ञापयामि नान्यं मानवमिति. भूयोभूय इत्थं वदतस्तस्य निस्पृहस्य प्रतापसिंहस्य मेवाडमेदिन्यां तथा स्वचारित्र्यपावित्र्यरक्षणे प्रेम वीक्ष्याल्पबलाअपि शौर्यशालिनो राजस्थानवासिनः सहाया अभवन्. तेषु च देवलवाडा-

धिपः प्रमुख आसीत्. तं हि महाराजः स्वदक्षिणहस्तत्वेन व्यपादिशत्.

यतः प्रभृति सिसोदियावंशजाश्रितोऽडदुर्गान्निःसारिता अकबरेण, ततःप्रभृत्येव चितोडनगरीं विधवामकथयन् सर्वेऽपि बन्दिजनाः. तेषां चौजस्विगीतानि निशम्यातिखिन्नः महाराजः प्रतापसिंह इत्थं शपथमकरोत्—यावदहमिमां मेवाडमेदिनीं पारतंत्र्यनरकान्नोद्धरिष्यामि. यावच्चेदं चितोडदुर्गमात्महस्तगतं न करिष्यामि तावदहं सर्वान् विलासांस्त्यक्ष्यामि. स च तद्दिनमारभ्य सुवर्णपात्राणि विहाय दीनवत्पर्णावलीष्यभुंक्त. तथैव तूलमयानि मृदुलानि शयनानि विहाय तृणमयेऽशेत. तपस्विजनोचितं जटाकलापमप्यबध्नात्. एवं महोत्सवेऽपि पटहादीनि मंगलवादनानि वादयितुं प्रत्यादिदेश. अद्यापि हि तामेव रीतिमुदयपुराधीशा अनुसरन्ति. अस्तु.

एवं श्रीमन्महाराजप्रतापसिंहः सर्वविलाससुखानि विहाय मातृभूमेः स्वातंत्र्यलाभाय तीव्रं तपस्तप्तुमारभत.



# ८ मानसिंहस्यापमानः.



## ( १ )




रामचन्द्रस्य पुत्रः कुशो बहुकालं राज्यमकरोत्. तद्वंशजाश्च क्रमेण नानादेशेषु पर्यटन्तो नानादेशानगच्छन्. कश्चन साहसिकस्तद्वंशजो राजस्थानमागत्य तत्रत्यान् वनेचरान् विजित्य 'अंभेर' नामकं नगरं वासयामास. तदीया वंशजा अपि तत्रैव निवसन्तो न्यायेन स्वप्रजाः पालयामासुः.

अथ यदा महंमदीयधर्मानुसारी मोंगलकुलसंभवो बाबरनामा दिल्लीपतिः प्रतापशालिनं संगमहाराजं जेतुं राजस्थानमागच्छत्तदैव तेन समं योद्धुमात्मानमशक्तं मन्यमानो जयपूरनराधीशो भगवानदासः स्वकन्यां तत्पुत्राय हुमायूनाय ददौ. तद्दिनमारभ्य जयपूराधीशस्यैश्वर्यमवलोक्य लुब्धा मूढा अन्ये राजानोऽपि स्वकन्या यवनेभ्यो वितीर्य नश्वरमैश्वर्यं समपादयन्. अस्तु.

तस्यास्य जयपूराधीशस्य दत्तकः पुत्रो मानसिंहः. अयं च निसर्गत एवातिशूरः. तस्मिन्समये कृत्स्नेऽपि राजस्थाने मानसिंहसमो वीरो नासीदेव. यद्यकबरस्य सहायो मानसिंहो नाभविष्यत्तदाऽकबरोऽपि भारतवर्षस्य सम्राट् भूपालः कदापि नाभविष्यत्. अयं च यथा पराक्रमी तथैवाधर्मभीरुरपि.

एकदा क्रमेण सर्वं भूप्रदेशं विजयमानोऽयं मानसिंहोऽटकनदीतीरमाययौ. तस्या नद्या उल्लंघने शास्त्रनिषेधमुपलभ्य चिन्तातुरः किंकर्तव्यतामूढः स्वाधिपमकबरमपृच्छत्. स तु धूर्तशिरोमणिस्तदानीमेव—

कृत्स्ना भूमिर्यदीशस्य । निषेधोऽत्राटने कुतः ॥
मन्यते प्रतिषेधं यः । प्रतिषिद्धः स एव तु ॥ १ ॥

इति श्लोकं पत्रमारोप्य शीघ्रमेव तदन्तिके प्रेषयामास. वस्तुतस्तु इदं विपरीतमिवाभाति. यो हि स्वकन्या वा भगिनीर्वा गोमांसभक्षकेभ्योऽदात्स एव गमनागमनविधिप्रतिषेधविषयिणीं चिन्तां करोतीति. अस्तु.

मानसिंहो हि दिल्लीपतेः सेनापतिर्नाम भूत्वा कृत्स्नामपि प्रतीचीं दिशं व्यजयत. पूर्वस्यां दिशि वर्तमानान् वंगादीनपि जित्वा दिल्लीपतेर्यशः प्रसृतमकरोत्. प्रायश्च जयपूरनराधीशा अतिशूराः स्वामिभक्ता एवासन्. अद्यापि हि जयपूरराज्यप्रजाजनाः शौर्येण समन्विता एव.

---

( २ )

वाचका ? इदं खलु सकलभारतवर्षेतिहासेऽपूर्वं वृत्तमिति यथाशक्ति सविस्तरं निरूपयामि.

भारतवर्षेऽत्यन्तं भिन्ना भोजनादिविषये ततोऽपि विवाहविषये रीतिः प्रचलति यादृश्यन्यत्र जगतीतले कुत्रापि न दृश्यते. यद्यपि पाश्चात्यदेशेषु प्रायः समैरेव कुलीनैः पुरुषैः समं पुरुषा भुञ्जते विवाहादिसंबंधं कुर्वन्ति च, तथापि तत्र साम्यं वित्तमूलकं क्वचिच्च विद्यामूलकमपि. तथापि यथा कुलीनत्वमकुलीनत्वं परंपरागतमेवात्र गृह्यते न तथाऽन्यत्रेति महदस्ति वैषम्यं. प्रायो मानवा दृश्यैः सत्संगादिककारणैर्बाह्यविद्यासु प्रगल्भतां दधते परंतु अन्तःकरणशुद्धिं कदाचिदेव लभन्ते. बाह्यशुध्यपेक्षयाऽन्तःकरणशुद्धिरतिकठिनाप्यधिकश्रेयसी. सा च प्रायः परंपरागतसंस्कारैरेव लभ्यते. यथाहि दूषितं पंकिलं जलमेकस्मात्तडागादन्यस्मिंस्तडागे नीत्वा संस्क्रियते ततोऽपि अन्यत्र नीत्वा पुनरपि तत्संस्क्रियते. एवं त्रिः संपाद्य तज्जलं शुद्धं भवति. तथैवान्तःकरणानां वा तत्स्थसंस्काराणां वा गतिः. अस्तु.

भारतवासिनो जना बाह्यवस्तुनाशापेक्षयाऽन्तःकरणधर्माणां शीलादीनां नाशं हानिप्रदं मन्यन्ते. ते च पारतंत्र्यनरके पतिष्यन्ति; सर्वस्वहानिं स्वीकरिष्यन्ति, समये च स्वप्राणानपि त्यक्ष्यन्ति, परन्तु ते शीलत्यागं कदापि नेष्यन्ति. एतदेव मनसि कृत्वा ते जातिविभागं रचयन्ति. वर्तन्ते च तमनुसृत्य. कथमेतत्संभवतीति वयं संक्षेपेण विचारयामः.

कस्याऽपि वस्तुनो गुणान्तरसंक्रमणे तत्सान्निध्यमेव कारणमिति सर्वसम्मतं. नहि जलेऽपतितानि पत्राणि जलं दूषयितुं प्रभवन्ति. एवंस्थिते तत्सान्निध्यं यथा यथाऽधिकं भवेत्तथा तथा तस्य गुणास्तास्मिन्संक्रामेयुः. एतदर्थमेव नीचेभ्यो जलादिकमपि न गृण्हन्ति. अस्तु. सर्वेषु सान्निध्यकारणेषु विवाहः परं सान्नि-

ष्यकारणं. यतो वधूवरौ मिलित्वा नूतनमपत्यमुत्पादयतः. तस्मिन्नपत्ये उभयोरपि अंशयोः सत्वेन प्रायः पितृगुणकमेव तज्जायते.

एवं सर्वं सृष्टिनियममवधार्यैवार्या भारतवासिनो जना विरुद्धगुणस्वभावैर्जनैः समं विवाहं न कुर्वन्ति. यैश्च समं कुर्वन्ति तानात्मनोऽभिन्नान्मन्यमानाः सर्वथा तद्रक्षणाय प्राणानपि अगणयित्वा प्रयतन्ते.

इमं च भारतवासिनां स्थिरं स्वभावमवलोक्य दूरदर्शिनो यवनभूपतयोऽत्र स्वीयं राज्यं स्थिरीकर्तुं प्रयतमाना मान्यानां मानधनानां क्षत्रियाणां कन्यकाभिः समं विवाहमकुर्वन्. ते च सत्यमेवेत्थममन्यन्त—अत्यन्तं भिन्नाचारेषु शूरजनखनिषु परमप्राचीनेषु अगणितजनादरपात्रेषु एषु क्षत्रियकुलेषु द्वेषपरेषु जीवत्सु सत्सु कदापि शक्रस्यापि राज्यं स्थिरं न भवेत्तस्मात्प्रथममेतेषामस्माकं च भेदो विनाशनीयः. स च भेदो विवाहसंबंधं विना न नश्येत्. नष्टे च भेदेऽस्मद्वंशजान् स्वकन्यासु जायमानत्वेनात्मीयानेव मन्यमानास्तदर्थं सर्वदैव दक्षा भवेयुः. दक्षेषु चैतेषु राजकुलेषु कोऽपि शत्रुरान्तरो वा बाह्यो वा नास्माकं राज्यमाक्रन्तुं शक्नुयात्. इति.

वाचकाः! इदं सर्वं विचार्य क्षत्रियकुलैः स्वसंबंधं विधातुं प्रयतमानास्ते यवनाधिपाः प्रथमतो न यशोऽलभन्त. कथं खलु क्षत्रियराजा अनादिकालसंपादितान्सद्गुणान्विहायाचारादिभिः पशुकल्पैर्यवनैः समं शरीरसंबंधं स्वीकुर्युः. ते च क्रूराः सहसा सर्वं भारतवर्षमाकुलयन्तः क्षत्रियराजानतिपीडयामासुः. क्षत्रियराजेष्वपि केचन विहारदक्षा विषयोपभोगेनैवात्मनः साफल्यं मन्यमाना य आसंस्ते सत्वरं यवनपीडापरिहाराय शरीरसंबंधं विधातुं

स्वीचक्रुः. सज्जनाः ? तैरपि आत्मरक्षणार्थमेव तथा चेष्टितं. अतएव यथा जयपूराधिपप्रभृतिभिः क्षत्रियराजैर्यवनाधिपतिभ्यः स्वकन्यकाः प्रदत्तास्तथैव तेषां कन्याः स्वपुत्रेभ्यो न स्वीकृताः. किमत्रान्यत्कारणं ऋते तादृशसंबंधस्यानिष्टत्वात्. अयं च संबंधो न संतोषेण संवृत्तः किंत्वयमापद्धर्मएव. तत एव नष्टे यवनसाम्राज्ये ते सर्वेऽपि यवनसंबंधिनो जयपूराधिपप्रभृतयः क्षत्रियराजाः पुनरपि शुद्धमुदेपुराधिपं स्वशुध्यर्थं प्रार्थयन्त. यथा यवनानां राजस्थानवासिषु राजकुलेषु वृत्तिः स्त्रीविषयिण्येव, न तथा तेषामन्यत्र. नह्यलौकिकसौन्दर्यशालिन्यो राजस्थानललनाः ? सौन्दर्यं च प्रायः सर्वत्रास्त्येव. तस्माद्यवनानां क्षत्रियैः समं शरीरसंबंधविधानाग्रहे भारतवासिशूरजनसाहाय्यसंपादनं विना नान्यः कोऽपि हेतुरिति मे भाति.

ये च खलु प्रतापसिंहसदृशा अलौकिकधैर्यशालिनो नरपुंगवा आसंस्ते तु परिवर्तिनि संसारे कालवशादागतां विपदमनुभूय पुनरपि प्राभातिक प्रभाकरइव दैदीप्यमानमुखकमलाः शाश्वतिकं यशोऽलभन्त. निःसंदेहं ते धन्याः पुण्यश्लोकाः प्रातःसंस्मरणीयनामानः. अस्तु.

पूर्वोक्तरीत्या जयपुराधिपो भारमल्लः स्वकन्यां दिल्लीपतयेऽकबराय ददौ. मरुदेशाधिपोऽपि मालवदेवः स्वकन्यां जोधानाम्नीं युवराजायाकबरपुत्राय. इयमेवाकबरपौत्रस्य शहाजहाननाम्नो दिल्लीपतेर्माता.

एवं महामान्यैर्जयपूराधिपप्रभृतिभिर्महाराजैर्यवनसंबंधेऽनुष्ठितेऽन्ये क्षुद्राः क्षत्रियराजा अपि अनेनैव हेतुना स्वोन्नतिं प्रार्थयन्तो हीनैरपि यवनसामन्तैः समं शरीरसंबन्धमकुर्वन्. केवलमुदयपुरा-

धिपस्तथा बुन्दीकोटाधिप एव केवलं स्ववंशपावित्र्यमरक्षताम्. यथा तथा वा भवतु यावदयं भारतवर्षस्येतिहासो वर्तते तावादिदं वृत्तं पठित्वा सर्वेऽपि निस्पृहा जना क्षत्रियराजैरिदं महदनुचितं कृतमिति वदेयुरेव. अस्तु. किं गतानुशोचनेन. प्रकृतमनुसरामः.

---

( ३ )

सोऽयमद्वितीयपराक्रमशाली राजा मानसिंह एकदा दिल्लीपतिनाऽकबरेण भूमिविजये नियुक्तो दक्षिणां दिशं विजित्य दिल्लीपतेरकबरस्य दिव्यं यशः प्रासारयत्. अनेकान्भूविभागान्विजित्य तदीयां राज्यसीमामप्यवर्धयत्.

वाचकाः! भारतेतिहास इदमपूर्वं वृत्तं यत्--ये खलु नूतनागतान्विभिन्नाचारान्परकीयान्शत्रून्मन्यमाना अयुध्यन्त त एव पुनरपि तानेव स्वामित्वेन स्वीकृत्य तदाज्ञां प्रतिपालयन्ति. इमे महंमदीया यवना यदा हिमालयदरीमार्गैरत्रागतास्तदा तेषां क्षत्रियराजैः समं महान्ति युद्धान्यभूवन्. तैश्च क्षत्रियकुलानां कियान् क्षयः कृतः, तेषां भीत्यैव कतिभिरार्यमहिलाभिरग्निराश्रित इति सर्वस्मिन्वृत्ते जाग्रति सति तदीया एवार्यवंशजास्तानेव यवनान् स्वामित्वेनामन्यन्त. तेषामेव यशः प्रसारार्थं स्वबांधवानां स्वातंत्र्यमप्यपाहरन्. अस्मिन्विषयेऽस्ति एका कथा.

ये जना हस्तिक्रयविक्रयव्यवहारं कुर्वन्ति ते प्रथमतः पंचषान् हस्तिनः स्ववशान् कुर्वन्ति. तत्र हस्तिन्योऽपि काश्चन सन्ति. नूतनेषु हस्तिषु जिघृक्षितेषु सत्सु सा हस्तिनी प्रथमतोऽरण्ये विसृज्यते. सा कुटिलाऽङ्गनेव मदोन्मत्तं हस्तिराजं स्वप्रेमपाशैर्ग्रथ्नाति. आनयति तादृशस्थले यत्रान्ये चत्वारो हस्तिनो निभृतं स्थिताः. ते च

लोहशृंखला: शुण्डादण्डेषु धारयन्तस्तं समागतं निरीक्ष्य ताभिः शृंखलाभिर्निबध्नन्ति. सोऽपि च वन्यगजः स्वस्वातंत्र्यं रक्षयितुं प्रयतमानः पारतंत्र्यमनिच्छन्यथाशक्ति तैः समं युध्यते परन्तु यदा स्वमशक्तं मन्यते तदा तेषामाज्ञामनुवर्तते. यदा च स नवीनो गजो जलं पातुमिच्छति तदा ते सर्वेऽपि सुशिक्षिता गजास्तत्पादनिबद्धाः शृंखलाः शुण्डादण्डैरुद्वहन्तो यामिका इव चतसृषु दिशासु व्यवस्थितया प्रयान्ति.

अथ स गजो मासपर्यंतमेवं शिक्षितः स्वभावं विहाय तेषामेव मतमनुसरति. ततश्च सोऽपि स्वस्मिन्नेव्ययित्वा स सुशिक्षितहस्तिसमुदायः पुनरपि परस्मिन्वर्षे नूतनमेव हस्तिनं वन्दीकरोति. शिक्षित्वा च वशीकरोति. आश्चर्यं त्विदं यदपरवर्षे यः स्वातंत्र्यसुखार्थमकल्हायत. स एव हस्ती अस्मिन्वर्षे परस्य स्वातंत्र्यहरणाय प्रवर्तते. न स्मरति कदापीदं—यत्—अहं तु दुर्दैवतः परतंत्रः संवृत्तः परन्तु ये खलु स्वातंत्र्यभाजस्तानपि परतंत्रान्विधातुं किमर्थमहं प्रयत इति. अस्तु.

इत्थमेव राजानो मानसिंहप्रभृतयो दिल्लीपतिं स्वामिनं मन्यमानास्तदीयराज्यविस्तारार्थं रात्रिंदिवं प्रायतन्त. सज्जनाः! अन्योप्यस्ति भारतवर्षवासिनां जनानां विशेषतश्च राजस्थानवासिनां क्षत्रियाणां स्वभावो यत्ते यदीयमन्नं भुंजते श्वानइव तदेकचित्ता एव ते भवन्ति. न कदाऽपि कृतघ्ना भवन्तीति. अयं च स्वभावः परकीयैर्यवनैर्विशेषतश्च राज्ञाऽकबरेण सम्यग्ज्ञातः. तत एव मानसिंहसदृशान्क्षत्रियवीरान्सेनापतीन्विधाय तद्द्वारा स्वराज्यविस्तारमकरोत्. अस्तु. प्रकृतमनुसरामः.

स च मानसिंहो दक्षिणापथस्थं सोलापुरविभागं विजित्य

दिल्लीनगरं गच्छन् उदयपुरवासिनं सकलक्षत्रियकुलमुकुटमणिं महा-
राजं प्रतापसिंहं द्रष्टुमैच्छत्. संदेशवाहकद्वारा तथा न्यवेदयच्च.
महाराजप्रतापसिंहस्तु यवनसंबंधिनो यवनाधिपसेवकस्य तद्राज्य-
विस्तारार्थं रात्रिंदिवं स्वबान्धवानां स्वातंत्र्यमपहरतो देशद्रो-
हिणः स्वबांधवद्रुहश्च मानसिंहस्य दर्शनेऽत्यन्तमनुत्कमना आ-
सीत् परन्तु बहोः कालात्सिसोदियाकुलजातानां भूपालानामतिथि-
सत्कारे निरतिशयमादरं वीक्ष्य तत्सम्माननार्थमुद्यतो बभूव.
महान्तं मण्डपं निर्माय तत्र सर्वैः स्वसामन्तैः समं समागच्छन्तं
तं मानसिंहमुदयसागरतडागपर्यंतं प्रत्युद्गम्य सादरं समानीय
तस्य सत्कारमकरोत्.

## ( ४ )

राजा मानसिंहोऽपि स्वतंत्रं तं क्षात्रियकुलमुकुटमणिं सूर्यमिव
देदीप्यमानं, परसेवाजन्यपातकानाच्छादितं निष्कलंकं महाराज-
प्रतापसिंहं प्रेक्ष्य संजातानन्दोऽतिथियोग्यान् सर्वानप्युपचारानज-
ग्राह. द्वितीये दिने—महाराजः प्रतापसिंहो मानसिंहाय भोजन-
मदात्. तस्मिन्भोजनसमये यदा सेवकैः सुवर्णपात्राणि निहितानि
परिवेषितानि च. तदा तत्सत्कारार्थं प्रतापसिंहः स्वयं नागतः
स्वपुत्रं उमरावं प्रेषयत्. तेन भोजनार्थं विज्ञप्तो मानसिंहस्त
मवदत्.—अद्य भोजनार्थं महाराजः प्रतापसिंहः कुतो नागत
इति. उमरावस्तु—महाराजस्य शरीरे स्वास्थ्यं नास्ति. तस्य
शिरसि प्रबला वेदना जायते. तद्विलंबं विहाय भवद्भिर्भोक्तव्य-
मेवेत्यवदत्. राजा मानसिंहस्तु सहभोजनाभावकारणं ज्ञात्वा
खिन्नो जगाद. युवराज? मद्वचनान्महाराजं ब्रूहि—मया सह भोक्तुं

किमिति नागता यूयमित्यहं जानामि. शिरोवेदनायाश्च केवलं मिषमेव. यत्खलु तत्र कारणं तत्संवृत्तमेव. नाधुना तन्नश्यति. यदा च यूयं मया सह भोक्तुं नागमिष्यथ तदाऽहं केन सह भोक्ष्ये? एकाकिनस्तु मे भोजनं न भवेदेवेति. प्रत्यागताद्युवराजात्सर्वं मानसिंहस्य भाषितं निशम्य कोपाकुलो महाराजः प्रतापसिंहः पुनरपि सेवकद्वारा मानसिंहं विज्ञापयामास—राजन्? अहमस्मिन्समये तत्रागन्तुं न प्रभवामि. युष्माभिश्चाग्रहं विहाय भोक्तव्यं. यद्यन्यथामतिस्तदा यद्रोचते तत्कार्यं. स्वतंत्रा एव यूयमिति.

मानसिंहस्तु अवगतकारणोऽपि महाराजप्रतापसिंहस्य हृदयं ज्ञातुकामः पुनरपि युवराजस्तु मया सह भुंक्तामिति विज्ञापयतिस्म. तदानीं च प्रक्षुब्धप्रलयकालोदधिभयंकरो रक्तनयनयुगलनिपतदग्निस्फुलिंगः कोपातिरेककम्प्यमानाधरोष्ठो महाराजः प्रतापसिंहो मेघगंभीरध्वनिना—येन हि क्षत्रियेण स्वकन्या वा भगिनी वा यवनाय वितीर्य स्वकुलं कलंकितं तेन सममयं पवित्रसिसोदियावंशजन्मा प्रतापसिंहः संभुज्यात्मानं कलंकितं विधातुं नेच्छतीति जगाद. आदिशच्च तथैवाक्षरशो मानसिंहं निवेदयितुं युवराजं.

स युवराजोऽपि प्रतापसिंहस्य पुत्रस्तथैव मानसिंहायाकथयत्. मानसिंहोऽपि मानधनानामग्रेसरस्तमपमानमसहमानोऽग्रेस्थितमन्नं नमस्कृत्य तथैवोदतिष्ठत्. अत्रान्तरे महाराजप्रतापसिंहोऽपि तत्रैवाजगाम. तं वीक्ष्य मानसिंहः सखेदं—महाराज? प्रतापसिंह? यद्यपि यवनसंबंधविधानतो वयं भ्रष्टाएव, परन्तु युष्मत्पावित्र्यरक्षणाय वयं रात्रिंदिवं प्रयतामहे. यदीदृशेन वर्त-

नेन यूयमस्मानपमानयथ तदा वयमपि युष्मदभिमानं विहाया-
चिरादेव युष्मानप्यस्मत्सदृशान्विधास्यामः. यदा च सर्वे इमे यवना भारतभूमिं विजित्यास्माकं कुलं कलंकयितुमैच्छंस्तदाऽस्मत्स्वामिकुलपावित्र्यरक्षणाय वयमग्रेभूत्वाऽऽत्मन एव कुलान्यकलंकयाम. सम्प्रति यदि भवानस्माकमिमं दोषं मनुते तदा वयमपि युष्मदभिमानं विहाय यथेच्छं वर्तिष्यामहे. राजन्? एष प्रतापी दिल्लीश्वरोऽकबरोऽस्मदसंतोषभयादेव युष्मान्न पीडयति. अस्माभिश्च प्रोत्साहितः क्षणादेव विजित्य भारतान्निर्वासयिष्यतीति जगाद.

मानधनः प्रतापी प्रतापसिंहस्तत्स्वगर्वोक्तिमयं मानसिंहस्य वचो निशम्य क्रुद्ध आह —यवनश्याल? मानसिंह? सिसोदियावंशः किंवा तदीया वंशजा भगवन्तमेकलिंगं तथा श्रीनाथं विहाय नान्यं स्वरक्षणाय याचन्ते. नापि तेऽन्यसाहाय्ये विश्वसन्ति. यत्खलु सर्वस्मिन्नपि राजस्थानेऽथवा भारतवर्षे सिसोदियाकुलस्य पावित्रमस्ति यावच्चन्द्रदिवाकरं स्थास्यति वा तत्र कारणं केवलं सततं प्रतापशाली खड्ग एव. मानसिंह? स धूर्तो दिल्लीपतिः पराजयभयादेवास्मान्नबाधते ननु युष्माकमसंतोषभयात्. जितानां सेवकानां युष्माकमप्रीत्या किंवा स्यात्. यदा च चितोडनगरमाक्रन्तुं अकबरः समायातस्तदा त्वत्पित्रा तस्मै कन्या दत्ता तत्रापि कारणं चितोडरक्षणमथवाऽधिकराज्यलोभो वेति त्वमेव वद. जनास्तु जानन्त्येव किमत्र तथ्यमिति. तद्यवनाधिपेन सह संबंधे लोभ एव कारणमिति प्रत्यक्षं दरीदृश्यमाने पुनरपि मिथ्यावदनेन किमात्मानं कलंकयसि. साम्प्रतं च युष्मादृशैः स्वबांधवद्रोहिभिरेव सेवकैः कृत्स्नं भारतवर्षमात्मसात्कर्तुमिच्छति दि-

ल्लीपतिः. अस्मिन्नसारे संसारे सारः खलु मानेन जीवनं. तद्यदि न लभ्यते तदा शुनोऽस्माकं मध्ये कियदन्तरमिति त्वमेव विचारय. यथा शृंखलानिगडितपादयुगलस्य पारतंत्र्यनरकपतितस्य हस्तिनः सुवर्णभूषणानि न सुखदायीनि, एवमेव परतंत्रस्य तव पराक्रमो राज्यविस्तारश्च. अहं तु स्वप्नेऽपि न प्रार्थयामि एतादृशमपमानं. अहं च सुखेन नष्टेऽपि राज्येऽरवलीगुहायां स्थास्यामि न तु श्चेव मुकुलितहस्तयुगलः सिंहासनाधिवासिनोऽकबरस्य पुरस्तादुन्नतं शिरो नमयितुमिच्छामि. किंबहुनोक्तेन— यस्य वंशस्य परंपरयाऽपि यवनकुलसंबंधस्तेन कुलेन महाराजप्रतापसिंहः संबंधं कदापि न करिष्यतीति प्रतिजानामि. येन प्रतापसिंहस्य हृदयमकबरस्तथा तदीयाः प्रजाः सम्यक् जानन्तु, अस्मदीयाश्च लोभोपहतचेतस इति.

इदं च निःसंशयं मानहानिकारकं सर्वेषां क्षत्रियाणां पुरतो भाषणं निशम्यातिसंतप्तोऽश्वमारोहन्नुवाच मानसिंहः—यद्यहं तव मानं न हरिष्यामि तदा मानसिंहो न भविष्यामीति. तदानीमेवोग्रतेजाः स्वतंत्रः प्रतापसिंहः—रे क्षत्रियाधम ! मानसिंह ! यदा त्वं मदीयं मानमपहर्तुमागमिष्यसि तदा स्वभागिनेयमपि गृहीत्वाऽऽगच्छेति सरोषमब्रूत.

## ( ५ )

अथ तत्रावस्थानमनुचितं मन्वानो मानसिंहो महता वेगेन दिल्लीनगरमभिलक्ष्य प्रययौ. महाराजप्रतापसिंहश्च तेन पतितेन मानसिंहेन संलपनादात्मानं पापिनं मन्वानः स्वयं प्रायश्चित्तमकरोत्. तथैव यत्र यत्र च मानसिंहोऽतिष्ठत्तां सर्वामपि भूमिं गं-

गोदकेन पवित्रामकरोत्. यानि भाण्डानि तद्भोजनार्थमानीतानि तानि सर्वाण्यग्नौ निक्षिप्याशोधयत्. सर्वांश्च सेवकानपि प्रायश्चित्त दानेन पवित्रानकरोत्.

तामिमां वार्तां चारसमानीतां निशम्य दिल्लीपतिः सुतरां चुकोप. विचारयामास चात्मगतं—अहं च रजपूतक्षत्रियाणां पावित्र्याभिमाननिराकरणार्थं प्रयतमानस्तदीयाः कन्यका अपि पर्यणयम्. अगणितान् क्षत्रियान् स्वसेनायामस्थापयम्. महाकुलीनेभ्यः क्षत्रियेभ्यो महान्ति पदानि वितीर्य तानपि स्वपक्षपातिनोऽकरवम्. परन्तु अद्यापि रजपूतक्षत्रियाणामभिमानमदः सामग्र्येण न नष्टः. महाराजः प्रतापसिंहोपि सम्यग्जानाति मानसिंहमदीयं प्रेम. एवं सत्यपि सर्वेषां रजपूतक्षत्रियाणां पुरस्तात्तेनेत्थमपमानितस्तेन तस्य प्रतापसिंहस्य महाया बहव एवेति मन्ये. यथातथा भवतु. अधुना नास्त्युपेक्षाकालः. उपेक्षितश्च प्रतापसिंहः प्रतिदिनं बलाढ्यो भवन् दुर्जयो भवेत्. दुर्बलमेव रिपुं नाशयेदिति खलु राजनीतिः. इति.

तस्मिन्नेव समये राजा मानसिंहोऽपि अपमानमलिनमुखः शनैः शनैः राजसभामागत्य सर्वं वृत्तमकथयत्. राजाऽकबरश्च कोपकलुषमतिः कर्तव्यनिश्चयार्थं महतीं राजसभां विधातुं प्रधानामात्यमादिदेश.

द्वितीयदिने मध्यान्हमारूढे भगवति सवितरि सर्वैरसंख्यैः सामन्तैः स्वयोग्यतानुरूपमासनेषु समुपविष्टैरलंकृतायां सभायां महार्घासनमासीनो मोंगलकुलदीपोऽकबरः सर्वान् सामन्तानुद्दीश्याब्रवीत्—मदीयराज्याधारस्तंभाः? सामन्तश्रेष्ठाः! सभ्यानागरिकाः? इयं च सभा किमर्थमाहूतेति सर्वैः कदाचिन्न ज्ञातं

स्यात्. इयं सभा मम परममित्रस्य मान्यस्यालौकिकपराक्रमनिधेर्जयपुराधिपस्य मानसिंहस्यापमानदुःखनिराकरणोपायचिन्तनार्थमाहूता. अस्माभिश्च मानवघातानुत्सुकैः केवलं दयया समुपेक्षितः स प्रतापसिंहो राजानं दुरुक्तिभिरपमानयतिस्म. मादृशा बलाढ्या राजानः स्वसेवकापमानमात्मन एवापमानं मन्यन्ते. यदा त्वेवं तदा द्वितीयस्य हृदयस्येव परमप्रियस्य श्यालस्य महामान्यस्य मानसिंहस्यापमानं कथं मर्षयिष्यामि.

वस्तुतस्तु अयमपमानो न मानसिंहस्य किंतु ममव. यवनसंबंधात्खलु प्रतापसिंहेन राजा मानसिंहोऽपमानितः? अहं चेममपमानं यदि सहिष्ये तदाऽन्योऽपि मामपमानयेत्. तितिक्षा हि मुनेः शोभते न राज्ञः.

किंच -- प्रतापसिंहः स्वकुलपावित्र्याभिमानं धत्ते. परन्त्वहं ब्रवीमि— कुलपावित्र्यं नान्यसंबंधेन विनश्यति. यदि च तन्नश्येत्तदा दूषिते कुले न खलु पराक्रमशालिनः पुरुषाः प्रादुर्भवेयुः. नैवं दृष्टचरं. अयं हि मदीयो युवराजः किमहमिव न पराक्रमी. यदि च पवित्रे कुले सर्व एव जनाः शौर्यौदार्यशालिनो जायन्ते तदा प्रतापसिंहस्य पितोदयसिंहः कथमजायतेत्यपि कथनीयं. तस्मात्कुलस्य पावित्र्यापावित्र्ये केवलं मनसा कल्पिते. यो हि यस्मिन्समाजे संजातस्तस्मै तत्समाजकृता एव नियमा रोचन्ते नान्ये. एवंस्थिते यत्खलु यस्मै रोचते तत्तेन ग्राह्यं यन्न रोचते तत्त्याज्यं अस्मिन्नर्थे आग्रहो न कार्यः. राजा भारमल्लो मानसिंहस्य पिता संतोषेण मया सह शरीरसंबंधमकरोत्. अत्र प्रतापसिंहस्य हानिरपि न लाभोऽपि न. एवं स्थिते वृथा राजानं मदीयमपसव्यहस्तं मानसिंहमपमानयतः प्रतापसिंहस्य कथमु-

पेक्षा करणीया. अहं च परमेश्वरबालकेषु जीवेषु यो नीचोच्चभावं मन्येत तं परमात्मद्रोहिणं मन्यमानः शासितुं प्रयतएव. इदमेव हि राज्ञः प्रधानं कर्म यत्सर्वप्रजासु बन्धुभाववर्धनं. अस्मासु महता प्रयत्नेन बन्धुभावं वर्धयत्सु सत्सु वृथाभिमानेन कश्चित्तं विघातयेत्तदाऽहमिव यूयमपि तं शत्रुमेव मन्येध्वमित्यत्र नास्ति संशयः. तत् बाधवाः? न एवं रीत्या सर्वत्र वर्धमानं बन्धुभावं मानसिंहापमानविधानेन प्रतापसिंहो हन्तुमिच्छति. अधुना च सर्वेऽपि मिलित्वा तं प्रतापसिंहं पराजित्य परमेश्वरप्रियं बन्धुभावं वर्धयध्वम्. जगदीशश्चास्मानेव विजयिनः कुर्यात्. राजस्थाने च येऽस्माकं सामन्ताः सुहृदोऽपि निवसन्ति तेऽपि युष्मान्युद्धे साहाय्ययिष्यन्ति. एष प्रतापसिंहादन्यूनः शक्तिसिंहोऽपि तं चिरशत्रुं प्रतापसिंहं जेतुमागच्छत्येव चितोडाधिपः सागरावतोऽपि युष्मान्सर्वथा साहाय्ययिष्यत्येवेति.

तदिदं सोपपत्तिकं दिल्लीश्वरस्य भाषणं कपटमधुरं निशम्य सर्वेऽपि सामन्ताः कोपाकुला अहमहमिकया प्रतापसिंहं जेतुं प्रत्यजानन्.

राजनीतिकुशलोऽकबरस्तां सभां विसृज्य सायंकाले प्रधानामात्यानां गुप्तस्थले सभामकरोत्. तत्र चापमाननिराकरणाय सर्वानुमत्या मानसिंहमेव मुख्यं सेनापतिमकरोत्. द्वितीयं सेनापतिं स्वपुत्रं युवराजं व्यधात्. तांस्तांश्च सेनाविभागाध्यक्षान्सेनापतिमानसिंहस्याज्ञानुवर्तनार्थमादिदेश. सेनाव्यवस्थार्थं महान्तमपि कोशमदात्. ये खलु प्रतीतशौर्याः सेनाविभागास्तानेव मानसिंहाय ददौ. राजाऽकबरश्च रजपूतक्षत्रियाणां शौर्यं प्रत्यभिजानन्नत्युत्तमामेव सेनां सन्नाहयामास.

# १ हळदीघाटयुद्धस्य सन्नाहः

१ राज्यव्यवस्था.
२ साहाय्यस्वीकारः.
३ निवासस्थानव्यवस्था.
४ कुमळनेरदुर्गम्.

( १ )



महाराजः प्रतापसिंहश्च स्वरोपं गते मानसिंह एव निश्चितदिल्लीश्वराक्रमणः कर्तव्यनिश्चयार्थं स्वसहायानां सभामकरोत्. यद्यपि दिल्लीश्वरस्येवास्यां सभायां हीरकमयवस्त्रालंकारभूषिताः सुवर्णदण्डधारिभिर्वेत्रैरुपदिष्टमार्गा इभ्या सामन्ता नासन् केवलमत्र साधारणा एव ग्रामाधिपा महाभागस्य मेवाडभूपस्य प्रतापसिंहस्य साहाय्यार्थमागताः. परन्तु सज्जनाः! दिल्लीश्वरसभायां तिष्ठतां सामन्तानां प्रतापसिंहसहायानां ग्रामाधिपानां मध्ये महदन्तरं विद्यत इति मूढमतिरपि वदेत् किमुत कुशाग्रमतयः. इमे ग्रामाधिपाः केवलं स्वातंत्र्यार्थं तथा स्ववंशपावित्र्यार्थं प्रयतमानस्य महाराजप्रतापसिंहस्य साहाय्यार्थमागताः. ते तु अधिकभूविभागलाभेच्छया वा यवनाधिपकृपालोभेच्छया वा तत्रागच्छन्. अस्तु. महाराजः प्रतापसिंहः स्वसहा-

यानाह—मित्रवराः! इमे हि चारा वदन्ति—मानसिंहापमानेन कुपितो दिल्लीश्वरो महता सैन्येनास्मान्शासितुमागच्छतीति. अस्माभिश्च मानसिंहोऽपमानितः किंवा मानसिंहेन वयमपमानिता इतीश्वर एव जानाति. यश्चास्माभिरतिथिनिर्विशेषं सेवितो यथाशक्ति यथामति सम्मानितश्च. परन्तु यदा स आत्मनः कुलं कलंकयित्वा नः कुलं कलंकयितुमुद्यतो बभूव तदा मया निषिद्धः. सज्जनाः! नीचैर्यवनैः समं शरीरसंबंधो न मे रोचत इति सार्वजनीनं.

तथैव मया सर्वस्मिन् राज्य उद्घोषितं च. एवं स्थितेऽपि स मानसिंहः स्वयमत्रागत्य स्वेन सह भोक्तुमाग्रहमकरोदिति प्रतीयत एव तस्याशयः. केनापि उपायेन वयं स्वसादृश्यं प्रापणीया इति खलु तस्य हेतुः स च पापी यवनोऽकबरस्तस्यापमानं निमित्तीकृत्यास्माभिः सममचिरादेव युध्येत. तदत्र कर्तव्यं विचार्यताम्. दिल्लीपतिश्चास्मदपेक्षया बलेन धनेन च श्रेष्ठ इति निर्विवादं. तेन समं समप्रदेशे युध्यमाना वयं न जेष्याम इति निश्चितकल्पमेव. तदधुनाऽस्माभिः सहसाऽरवलीपर्वत एवाश्रयणीयः. स च पर्वतराजोऽनेकैर्विकटमार्गैर्भयंकरीभिश्च दरीभिर्दुष्प्रवेशाभिर्वृक्षराजिभिः शत्रुं प्रतिबध्नन्दृढमित्रैर्वनेचरैः प्रचुरफलमूलादिभिर्निर्मलनिर्झरसलिलैरस्मानुपकरिष्यति.

किंच—वयं यदा सर्वाभिः प्रजाभिः समं पर्वतवासिनो भविष्यामस्तदाऽयं प्रदेशो निर्मनुष्यः स्यात्. तथाचानायासेनानेन मार्गेण व्यवहारोऽपि रुंध्यात्. रुद्धे च व्यवहारे सैनिकेषु चान्नमलभमानेषु सत्सु स दुरात्माऽकबरः क्षीणबलो नास्माकं महतीं हानिं कुर्यात्. तदस्मिन् विषये भवतां किमनुमतमिति.

राजराजेश्वरे महाप्रतापे प्रतापसिंहे एवं वदति सति सर्वे तदीयाः सहाया रोमांचितगात्रा महताऽऽनन्देन ससिंहनादं प्रत्यवदन्—स्वामिपादाः! यूयमस्माकं स्वामिनः. सेवकानामयं धर्मो यत्स्वामिनियोगानुष्ठानं. तदद्यप्रभृति भवद्भिर्निःशंकमाज्ञा करणीया. वयं च तां शिरसा पालयिष्याम इति.

महाराजः प्रतापसिंहोऽपि तेषामुत्साहं वीक्ष्य सन्तुष्टः सर्वाः प्रजा उद्दिश्य प्रसिद्धिपत्रं प्रकाशयतिस्म—प्रजाजनाः! दिल्लीपतिरकबरो मानसिंहापमानं निमित्तीकृत्यास्माभिः सह योद्धुमागच्छति. तत्सेनायां च प्रायो यवना एवाधिकाः. यवनानां चित्तवृत्तिर्भवद्भिरनुभूतपूर्वैव. तद्यदि भवदंगनानां पावित्र्यं प्रियं, भवतां धर्मो वा प्रियस्तदा सहसाऽरवलीपर्वतसमाश्रयः कर्तव्यः. यो हीमां राजाज्ञां न पालयेत्सोऽवश्यं कठिनेन दण्डेन दण्डितो भविष्यतीति.

निशम्येमां पितृतुल्यस्य परमेश्वरसमस्य महाराजप्रतापसिंहस्याज्ञां सर्वे प्रजाजनाः प्राणप्रियाण्यपि स्ववसतिस्थानानि विहायारवलीशैलमध्यं गता वृक्षाणामधस्तात्स्वनिवासान्कल्पयान्तिस्म. इभ्या जना अपि केवलं साधारणा जना इव विस्मृतेभ्यभावा अवर्तन्त. महाराजः प्रतापसिंहश्च स्वनियोगानुवर्तिनः प्रजाजनान्वीक्ष्य संतुष्टः स्वयं सादिमंडलेन समं तस्मिन् प्रदेशे पर्यटन्नवशिष्टानपि जनान् पर्वतमध्ये प्रेषयामास.

अचिरादेव स रमणीयोपवनमण्डितः प्रासादततिभिरलंकृतः सुव्यवस्थितराजवीथीसहित उदयपुरस्य परितो वर्तमानो भूविभागः कंटकवृक्षमण्डितः क्रूरव्याघ्रादिपशुनिवासोऽभूत्. यश्च सदैव निर्भयः प्रवासिनयनान्यानन्दयत्सोऽधुना दिवाऽपि साह-

सिकानामपि मनोऽभीषयत्. महाराजः प्रतापसिंहश्च स्वयमश्व मारुह्य सादिमण्डलेनान्वितस्तं प्रदेशं पर्याटत्.

एकदा नित्यनियमानुरोधेन पर्यटति प्रतापसिंहे कश्चनाजापालकश्चिरं प्ररूढे घासे स्वाजायूथं विसृज्य मधुरं गायन्नतिष्ठत्. तस्य च दूरतो गानध्वनिं निशम्य विस्मितः शीघ्रमेव तत्स्थलमागत्य तं निश्चितमजापालमपश्यत्. तं राजाज्ञाभंगकारिणं विलोक्य क्रुद्धः स चण्डदण्डः प्रतापसिंहस्तं प्राणदण्डेनायोजयत्. राजाज्ञाभंगकारिणां किं शासनं भवतीत्यन्येभ्यः प्रदर्शयितुं तस्याजापालकस्य कलेवरं वृक्षेऽस्थापयत्.

एवं स्वराजं प्रतापसिंह क्रूरदण्डमवलोक्यावशिष्टा अपि प्रजाजना अरवलिपर्वतमाश्रयन्त. वनेचराश्च तेन मार्गेण व्यवहरतो वणिजोऽलुण्ठन्. तद्भयादपि सर्वे व्यवहारिणो व्यवहार ममुंचन्. तेन दिल्लीपतिरत्यन्तं चिन्तामग्नो बभूव.

## ( २ )

एवं राज्यव्यवस्थां विधाय महाराजः प्रतापसिंहः साहाय्यलाभाय सर्वेषां ग्रामाधिपानां तथा राज्यस्थानवासिनां शूराणां भूपालानां समीपे विज्ञापनां प्रेषयामास. साचेत्थम् राजस्थानमातृभूमिकाः क्षत्रियश्रेष्ठाः ? एष दिल्लीपतिर्यवनोऽकबरो मदीयपराजयमिषेण कृत्स्नां नो मातृभूमिमात्मसात्कर्तुमत्रागच्छति. यद्यपि अन्ययवनराजापेक्षयाऽयमकबरो नीतिमांस्तथापि स यवनशरीरसंबंधविधानेन क्षत्रियाणां कुलानि दूषयितुमिच्छति. प्रयतते च. केषांचिदस्मदीयानां साहाय्येन यशस्वी च. प्रायो राजस्थानवा-

सिन: प्रधाना राजानस्तस्य सहाया एव. तद्यदि युष्माकं स्वमातृभूमिस्वातंत्र्यं प्रियं यदि वा जननीनां वा भगिनीनां वा शीलं प्रियं तदा शीघ्रमागत्य मम साहाय्यं कुरुत. अहं तु यावज्जीवं स्वातंत्र्यस्य पावित्र्यस्य रक्षणे कृतशपथोऽस्मि. भगवानेकलिंगो युष्मभ्यमुचितामेव मतिं ददातु इति.

मान्यस्य शौर्यखनेः पुण्यश्लोकस्य प्रतापसिंहस्य विज्ञप्तिं स्वीकृत्य बहवः खलु मानधनाः स्वातंत्र्यप्रिया राजस्थानोत्पन्ना स्तरुणास्तं साहाय्ययितुमाययुः. तान् स महात्मा महाराजः प्रतापसिंहः परं सम्मानयति स्म. ते च नानाशस्त्रप्रहरणाः स्वामिभक्ता महताऽनन्देन स्वातंत्र्यचिन्हमिव मातृभूमेः पवित्रसिसोदियाकुलकीर्तिलक्षणमिव सदोदयशालि समुद्यमानरविकिरणांकितं सुवर्णतंतुमयं ध्वजमग्रे कृत्वा युद्धोत्सुका अतिष्ठन्.

वनेचरास्तु तं महात्मानं प्रतापसिंहं स्वस्वामिनं मन्यमानाः स्थाने स्थाने संघशो मिलित्वाऽरण्यवासार्थं राजाज्ञया समागतान्नागरिकान्नानाविधैरुपायैरसाहाय्ययन्. समये समये च नानानगराणि पर्यटन्तः शत्रुस्कंधावारेषु कृतप्रवेशाः सर्वं रिपुवृत्तं प्रतापसिंहायाकथयन्. यद्यपि प्रतापसिंहो दुर्दैवतः संपन्नो नासीत्. अन्ये च जयपुराधिपतयो दिल्लीश्वरकृपया परमसपन्ना आसन् परन्तु तस्य साहाय्यकारिणः केवलं तस्य सत्यनिष्ठां स्वातंत्र्यप्रियतां चावलोक्य समागच्छन् न ते कदापि सुखमवांच्छन्. तेषु च साहाय्यकारिषु मध्ये प्रतापसिंहस्य भ्रातुष्पुत्रा एव प्रमुखा आसन्. दिल्लीश्वरोऽकबरस्तान्स्वपक्षपातिनो विधातुं महान्तं प्रयत्नमकरोत् परन्तु सत्यव्रतास्ते प्रतापसिंहपक्षं नामुंचन्. प्रतापसिंहस्य बन्धुस्तु सागरजीनामा दिल्लीश्वरकृपया लब्धचितोडाधि-

पत्यो बन्धुद्रोहमकरोत्. तथा साळुंब्राधिपस्य दिवंगतस्य पट्टराजस्य पुत्रा अप्यागच्छन्. किंबहुना — राजस्थानवासिनः स्वातंत्र्यप्रियाः सर्वेऽपि क्षत्रियश्रेष्ठाः स्वदेशस्वातंत्र्यरक्षणार्थं प्रयतमानस्य मेवाडाधिपस्य साहाय्यं विधातुममिलन्.



## ( ३ )

वाचकाः ! वीरशिरोमणिर्भारतस्वात्मभूतः स प्रतापसिंह इत्थं महाप्रांतलब्ध्वा तेषामनुमत्या निवासस्थानव्यवस्थामकरोत्. स च प्रथमतो यत्र स्थले प्रजाजना अवसंस्तस्य स्थलस्य परितः पाषाणमयं महान्तं दुर्भेद्यं तटं व्यरचयत्. तादृशस्थानं प्रति समागच्छत्सु मार्गेषु दुर्गमस्थानविरचितान् निरीक्षकसैनिकनिवासान् स्थापयित्वा शत्रुप्रवेशं प्रत्यबध्नात्. शत्रुसेनाप्रवेशप्रतिबन्धार्थं महद्भिः पाषाणनिचयैस्तथा विशालवृक्षैः प्रमुखान् राजमार्गान् सकंटकान् विधायान्यानेव च दुर्ज्ञेयान् मार्गान् प्राचारयत्.

निवासस्थानं परितः शूराणां स्वामिभक्तानां सैनिकानां समूहान् स्थापयामास. खड्गादीनां शस्त्राणां तथा सर्वविधस्यान्नस्यापि पर्याप्तं संग्रहमकरोत्. निवासस्थानेऽपि यथाशक्ति युद्धानर्हान् गाथकादीन् विलासैकहेतून् जनान्नास्थापयत्. केवलं प्रसंगे स्वरक्षणसमर्थान् प्रायो वृद्धहीनान् जनानेव स्थातुमादिदेश. जलप्रवाहान्निभृतांश्चक्रे शत्रुकूटचारसंपर्कभयात्. निवासस्थानस्य परितः प्रदेशे यानि दुर्गाणि आसंस्तेषु अपि सर्वां युद्धसामग्रीमेकत्री— चक्रे. स्थाने स्थानेऽतिदूरनिरीक्षणार्थं निरीक्षकावस्थितयेऽत्युच्चान् पाषाणमयान् स्तंभांश्चक्रे.

एवमेव वनेचरानपि संघशो दरीमुखेषु अत्युन्नतपर्वतशिखरेषु नदीनामुद्गमेषु विकटस्थलीषु नानालताश्लिष्टवृक्षराजिषु स्थापयित्वा तत्प्रजानिवासस्थानं निर्भयमकरोत्. तेऽपि प्रजाजना निर्भीकाः स्वामिनः प्रजाहितदाक्षिण्यमवलोक्य सानन्दा महतोत्साहेना वर्तन्त. प्रथमत एव स्वाभाविकशौर्यशालिनोऽपारधैर्यसपन्ना जना आसन्. साम्प्रतं तु प्रतापसिंहमग्रेसरं लब्ध्वाऽकुतोभया एवाभवन्. ते सर्वेऽपि प्रजाजनास्तस्मिन्स्थले निवसन्तः सुखेन काल मयापयन्.

---

( ४ )

महाराजः प्रतापसिंह इत्थं प्रजाजननिवासस्थानं निर्भयीकृत्य स्वनिवासं समनह्यत्. उचितमपीदं. यतो राज्ञश्च राजत्वं प्रजास्वास्थ्यमूलकमेवेति सर्वाणि शास्त्राणि वदन्ति. सोपपत्तिकमपीदं यतो यो हि राजा प्रजासंतोषार्थं न प्रयतते उदास्ते वा, तं प्रजा अपि तत्समावस्था न साहाय्ययन्ति. प्रजासाहाय्यहीनो नृपो बलाढ्योऽपि गुणवानपि शीघ्रमेव विपन्नो भवति. राजा नाम प्रजासमष्टिः. यत्र च समुदायस्यानुग्रहो नास्ति तत्र कथं संपदो निवसेयुः. नैतावदेव—परन्तु समये समये प्रतीपं वर्तमानो नृपः प्रजाभिः सिंहासनान्निष्कास्यते हन्यते वा. अस्तु.

प्रतापसिंहश्च स्वप्रजा अरवलीपर्वतमध्ये निवासयित्वा स्वयमपि उदयपुरं त्यक्त्वाऽतिबलाढ्यं सर्वतो विशालैररवलीशैलशृंगैराच्छादितं कुमळनेरदुर्गं राजधानीनगरं व्यधात्. यथैव राज्ञः प्रजाधीनत्वं तथैव राजधान्यधीनौ जयपराजयौ. यद्यपि राजा शतशः पराजीयेत तथापि स तावन्न पराजित एव यावदस्य राज-

धानीनगरं विजयशालिना शत्रुणा नाक्रम्यते. तस्मात्सर्वेऽपि स्वतंत्रा राजानः स्वराजधानीनगरं सविशेषं रक्षन्ति.

किंच, प्रायो राजधानीनगरे राजा स्थित्वा सर्वं राज्यव्यवहारं पश्यति. तेन तत्र सर्वेऽपि अमात्यादयो मंत्रिणो निवसन्ति. राजा तैः संमंत्र्य राज्यकार्याणि करोति. एवंस्थिते शत्रुर्मंत्रिभिः समं राज्ञो निग्रहार्थं प्रथमं राजधानीमेवाक्रामति. यदि च सकुटुंबो राजा मंत्रिभिः समं शत्रुणा गृह्यते तदा सर्वमपि राज्यमनायासेन हस्तगतं भवति. एतां राजनीतिमनुरुध्य शत्रवः प्रचलन्ति. अतः सर्वेऽपि राजानो राजधानीरक्षणे तत्परा भवन्ति.

महाराजः प्रतापसिंहश्चोपरिनिर्दिष्टां राजनीतिमनुसृत्य निसर्गत एव दुर्जयं कुमळनेरदुर्गं पुनरपि सविशेषं संचस्कार. तस्य दुर्गस्य शैलदुर्गतया परिखाभावेऽपि सामन्तात्परिवर्तिषु गिरिभूविभागेषु नूतनानि प्राकारवलयानि व्यरचयत्. तेषु च शतशो निरीक्षणस्थानान्यकरोत्. तेषां च प्राकारवलयानामन्तः शूरसैनिकानां समूहानस्थापयत्. यथासंभवं शतघ्नीरपि स्थाने स्थाने न्यवेशयत्. ये च परमविश्वासशालिनो मौलाः सेवका आसंस्तान्विशिष्य तस्मिन्दुर्गे न्यधात्. गुप्तमार्गानपि संस्कृत्य तेषु स्वहृदयानीव विश्वस्तान्भृत्यान्न्ययोजयत्. दुर्गागमनराजमार्गवर्तिषु निरीक्षकनिवासेषु प्रभूतान्सैनिकानुपायुंक्त. स्वयं च रात्रिंदिवं शूरैर्विश्वस्तैः सादिभिरनुगम्यमानः सर्वत्र प्रचरन्निखिलमपि स्थलमपश्यत् न्यूनं चापूरयत्. सैनिकांश्च प्रोदसाहयत्. चारांश्च शत्रुवृत्तनिवेदनार्थं प्रैषयत्. ज्ञात्वा च तत् प्रतिनिवृत्तानां तेषां मुखेभ्यः स्वयं वृत्तांतमशृणोत्. किंबहुना—यद्यच्छक्यं कर्तुं तत्सर्वमपि मातृभूमेः स्वातंत्र्यरक्षणार्थं स्वपाविभ्यावनार्थं च चक्रे महाराजः प्रतापसिंहः.



# १० युद्धवर्णनम्.

१ यवनसेनागमनम्.

२ युद्धम्.

३ युवराजसेलिमाक्रमणं.

४ प्रतापसिंहस्य समरत्यागः.

५ शक्तिसिंहस्य बन्धुप्रीतिः.

( १ )



महामानी दिल्लीश्वरो यवनाधिपतिरकबरश्चारमुखेन सर्वं प्रतापसिंहचेष्टितमवगम्य सावधानः स्वसेनां सम्यक् सन्नाहयामास. स च प्रथमतो स्वयं दिल्लीनगरान्निर्गत्य राजस्थानसमीपे पुष्करसरसो नातिदूरेऽजमीरनगरे कृतवसतिः सर्वां सेनामेकत्रीचकार. तदानीं चाजमीरनगरं द्वितीयं राजधानीनगरमिव सुरक्षितमासीत्. तत्र स्थितः सः सर्वानपि राजस्थानवासिनो नृपान् स्वसाहाय्यार्थमागमनाय दूतद्वारा आज्ञापयत्. तेऽपि च यथाशक्ति स्वसैनिकानजमीरनगरं प्रति प्रेषयामासुः. तत्र मरुदेशाधिपो मालदेवो मुख्य आसीत्. अयं च

मालदेवो न केवलं रिक्तहस्तोऽकबरमपश्यत्किंतु स्वपौत्रीमपि युवराजायादात्. तेन संतुष्टो दिल्लीपतिः प्रभूतं धनं तस्मै वितीर्य विस्तीर्णं भूविभागं ददौ. अस्तु.

एवं सर्वानपि राजस्थानवासिनस्तथाऽन्यस्थानवासिनः स्वसामन्तानुपस्थितानवलोक्य दिल्लीपतिरकबरः सेनापतिं मानसिंहं विधाय तदनुमत्या वर्तनार्थं सर्वानपि सैनिकानादिश्य विजयाय प्रेषयामास. निभृतमवदच्च मानसिंहं प्रति यथासंभवं महाराजः प्रतापसिंहो जीवग्राहं ग्राह्य इति.

सा तु सेना हिमवतो निर्गता गंगेव मेवाडदेशमुद्दिश्य वेगेन धावमाना मार्गस्थानि नगराणि नामशेषाण्यकरोत्. सर्वे नागरिका जानपदाश्च जना यवनस्वभावं जानन्तः सत्वरं निवासस्थानं त्यक्त्वा पलाय्यान्यत्रागच्छन्. यद्यपि यवनसेना प्रभूतधनकोशशालिन्यासीत्तथापि शीघ्रमेवान्नमलभमाना दुःखेन प्रायात्. तस्यां सेनायां च प्रमुखा राजपुरुषा श्रीमहाराजप्रतापसिंहस्य बन्धुः शक्तिसिंहस्तथा सागरजीनामको महंमदीयधर्मानुयायिना मोहबतखाननाम्ना पुत्रेण समं द्वितीयोऽपि बन्धुरासीत्. अन्येऽपि वीरपुरुषा आसन्.

एभिश्च पुरुषवरैः समं सा सेना मेवाडदेशं प्रविवेश. समरचतुरः स मानसिंहः स्वसेनां विरलीभूय गन्तुमादिदेश. येनाल्पीयसीं सेनां वीक्ष्य युद्धार्थं स्वयमग्रे समागतो महाराजः प्रतापसिंहः सुजेयो भविष्यतीति. महाराजश्च स्वयं रणविद्याविशारद इमां युक्तिं जानन् चारविदितसर्ववृत्तः समस्थले यवनानां पराजये सशंको विषमस्थल एव स्थित्वा योद्धुं मनश्चक्रे. यवनसेना च

महाराजप्रतापसिंहं दुर्गमारण्यमध्यवासिनं निशम्य तत्र गन्तुकामः सावधानेनारवलीपर्वतमध्यं प्राविशत्.

वाचकाः! तदानीं ग्रीष्मसमयोऽतिप्रखररविसंतापेन, तप्तायोरसवर्षिभिरिव रविकिरणैः, अत्युष्णवातैः, प्रतापशुष्कसरोवरैः, शुष्कलतासहस्रैस्तां मेवाडस्वातंत्र्यहरणार्थं प्रवृत्तां यवनसेनामत्यन्तमपीडयत्. सैनिका अपि रविकिरणप्रखरसंतापमसहमाना अन्नं जलं चालभमाना क्षुद्व्याकुलाः पिपासाशुष्ककण्ठा भूयोभूयो निभृतं समागच्छतां परमचपलाश्वानां, ज्ञातगमनागमनमार्गाणां, स्वदेशाभिमानभयंकराणां, स्वातंत्र्यरक्षणतृणीकृतजीवानां महाराजप्रतापसिंहस्य वीररसप्रधानैः स्वातंत्र्यपावित्र्यरक्षणमयैर्दिव्यैर्भाषितैः प्रोत्साहितानां रजपूतक्षत्रियाणां तथा स्वामिभक्तानां वनेचराणामाक्रमणैरुद्वेजिताः, प्रबलवात्याक्षिप्तधूलिधूसरनेत्राः, अज्ञातगन्तव्यमार्गाः प्रायः प्राणान् विससर्जुः. अन्ये च कतिपये क्रूराणां वनवासिनां व्याघ्रादीनां पशूनां भक्ष्यतामयुः. केचन महाराजप्रतापसिंहस्य बन्दिनोऽभवन्. अश्वाश्च घासमलभमानाः क्षुत्परिहारार्थं शुष्काण्येव पत्राणि भक्षयन्तः कालमुखमपश्यन्. अन्ये चावशिष्टा अस्थिशरीरा अजायन्त. हस्तिनः सूर्यसंतापतप्ता अवगाहनमलब्ध्वा मृताः स्वीयैः प्रचण्डैः शरीरैस्तां मेवाडभूमिं प्रथमत एव पर्वतसंकटितां पुनरपि संकटयन्तिस्म. सेनामुख्या अपि महद्भिः क्लेशैरुद्वेजिता दिल्लीपतेः कोपभिया कथमपि तस्मिन्दुष्करे देशेऽतिष्ठन्. कोशाश्च वर्धमानैर्व्ययैः प्रतापसिंहसैनिकाक्रमणैरपहृता रिक्ता अभवन्.

राजा मानसिंहश्च स्वसेनाया दुर्दशां विलोक्य दुःखितोऽपि

अपमानरोषकलुषितान्तःकरणोऽगणयन् स्वदुःखं सेनाविपदश्च दिल्लीश्वरात्साहाय्यमानीय पुनरपि महता वेगेनाग्रे आजगाम.

शीघ्रमेवोत्तुंगशिखरैर्युद्धदर्शनाय प्रकटितमस्तकैरिव विशालैर्वृक्षराजिपरिच्छादितगात्रैः पर्वतैः परिवेष्टितं, विषमभूमिकं, क्रूरव्याघ्रादिगणनिवासीभूतं, सकलराजस्थानेतिहासप्रसिद्धं हळदीघाटनामकं स्थलं प्राप. तत्र च कलहस्कंधावारो मानसिंहो युद्धार्थे स्वसेनाया व्यूहान् विरचयामास. तस्मिन् स्कंधावारे मध्ये युवराजस्य निवासो राजवैजयन्तीसमेत आसीत्. मानसिंहोऽपि तत्रैवावसत्. तस्य च परितः सामन्तानां निवासा आसन्.

महाराजप्रतापसिंहोऽपि शत्रुसेनां हळदीघाटस्थले कलहनिवासां निशम्य योद्धुकामो महतोत्सवेन कुमळनेरदुर्गान्निर्गत्य ऋखभनाथनाम्ना दरीमुखेन वेगेन शत्रुसेनाभिमुखो बभूव. तच्च दरीमुखमत्यन्तं संकुचितमासीत् तेन मार्गेण कथंचिदेकं शकटमगच्छत्. स्थाने स्थाने विकरालमुखा गुहासमूहा अपि आसन्. अस्तु.

अथ श्रावणमासस्य सप्तमे दिने प्रभाकर उदयाचलमारुरोह. तं चोदितं स्ववंशमूलपुरुषं सवितारं नमस्कृत्य महाराजः प्रतापसिंहः स्वसेनाव्यूहान्व्यरचयत्. प्रथमतः पुरोभागे सादिमंडलं स्थापयित्वा तस्य पश्चात्पदातिमण्डलमस्थापयत्. सैन्यमध्ये च स्वयं शूरैः सामन्तैः सममतिष्ठत्. स्वसमीपएव राजवैजयन्तीं स्थापयामास. तथैव रणांगणसमीपेषु वृक्षेषु धानुष्कान् चललक्ष्यवेधकुशलान् वनेचरान् न्यवेशयत्. तेचाखंडतूणीरमांसलांसाः सानन्दं कपयइव लीलयैव वृक्षानारुह्य श्रीमहाराजप्रतापसिंहस्याज्ञां प्रत्यपालयन्. प्रतापसिंहश्च भूमिगतमुच्चैःश्रवसमिव प्रजविनं

विद्युल्लताऽपत्यमिव चपलं स्वामिनियोगपालनदक्षं स्वामिभक्तसेवकमिव मूर्तं यशइव सर्वतोगामिनं वाजिराजं चेतकनामकमारूढः सर्वामपि सेनां युद्धार्थं सन्नाहयामास. कोशांश्च स्वसन्निधावेव निधाय तेषां परितः स्वामिभक्तान् सामन्तान् न्ययोजयत्.

जयपूराधिपो राजा मानसिंहो महाराजं प्रतापसिंहं युद्धोद्यतमवगम्य योद्धुं स्वसेनामपि सन्नाहयत्. यद्यपि यवनाधिपसेना संख्यया क्षत्रियसेनामपेक्ष्याधिकैवासीत्. तथापि शौर्येण न्यूनैव सा. यथा हि स्वयमेव सानन्दं रजपूतक्षत्रिया यवनैः समं योद्धुं महाराजप्रतापसिंहेन मिलिता नैवं ते यवनसैनिकाः. ते च केवलं वेतनलाभार्थं सैनिका अभवन्. मानसिंहः सर्वमिदं जानन्नपि महता धैर्येण स्वसेनाया व्यूहान् विरचयामास. सेनामध्ये युवराजस्य सेलिमाख्यस्य महान्तं हस्तिनं निधाय तत्रैव राजवैजयन्तीं न्यधात्. तत्समीपे च स्वयं स्थित्वा परितः सर्वानपि सामन्तान् स्थापयामास. यवनसेनायां च शतघ्नीविभागः समीचीन आसीत्. तस्य रक्षणार्थं सादिमण्डलं न्ययुंक्त. तत्कृत्स्नमपि सादिमण्डलं नूतनतीक्ष्णाग्रभल्लमण्डितमासीत्. शतघ्नीविभागोऽपि प्रबलाश्वमण्डलसंयुक्तः खड्गधारिभिः शूरैः पुरुषैरक्षितः.

( २ )

महाराजप्रतापसिंहश्चोदितं मन्दप्रकाशं भाविस्वकुलजपराजयज्ञानादिव खिन्नमिव शोकसंकुलं, विशालपरिधिमण्डलमण्डितं सकलप्राणिकर्मसाक्षिणं सूर्यनारायणं प्रेक्ष्य खिन्नोऽपि अमुक्तधैर्यः प्रबलप्रतीपवातोन्मथितवैजयन्तीकुलोऽपि सोत्साहो नमस्कृत्य स्व-

वंशस्य जनयितारं तथा स्वेष्टदेवता उच्चारितहरहरमहादेवशब्द स्तद्युद्धसन्नाहेन स्थितं यवनाधिपसैन्यं शनैः शनैराचक्रमे.

अचिरादेव परस्परं मिलितयोस्तयोः सेनयोरनवरतानिपतच्छस्त्राघातशकलीकृतवीरदेहः, रोषकषायितविस्फारितनयनभीषणसैनिकगणः, कोपातिरेकचर्विताधरोष्ठनिपतद्रुधिरसिक्तश्मश्रुलवदनयवनः, प्रतिभटखड्गलूयमानयवनसैनिकरुण्डाच्छादितसमरभूतलः, उभयसैनिकसिंहनादमिश्रवाजिहेषारवसंकुलपटहस्वनः, प्रलयकालइव क्षणभंगुरजीवितः, पर्जन्यसमयइव विपुलकबन्धसंकुलः, मेघसमुदायइव विद्युल्लताप्रकाशसंनिभशतघ्नीवह्निभयंकरः, वज्रापात इवातिवेगनिःसरच्छतघ्नीतप्तायोगोलककृतच्छिद्रमयभूमितलः, तीक्ष्णासिधारानिहताश्वशरीरसंन्यासः, निहतसादिभयविह्वलयथेच्छधावमानघोटकगणसाबाधः, शस्त्राघातविह्वलपिपासुयोधगणसंकुलप्रपास्थलः खड्गच्छिन्नहस्तसंयोजनव्यग्रवैद्यसमूहः, निहतभटशरीरभूमिसात्करणव्यग्रसेवकजनः, अज्ञातस्वकीयपरकीयः, सेनाध्यक्षप्रोत्साहनोत्तेजितशूरगणः, शतघ्नीगोलकहतगजयूथसंकटितः, वसन्तसमयइव प्रियः सुरसुन्दरीणां, परीक्षासमयइव सुशिक्षितहस्तानां धानुष्काणां, स्वामिभक्तिशौर्यादिगुणानां निकषो भयंकरः संग्रामोऽजायत.

प्रवृत्ते च युद्धे प्रतापसिंहः प्रथममेव स्वसैनिकान् प्रोत्साहयन्नतिजवेन स्वशौर्यदर्शिकां दीपिकामिव राजवैजयन्तीं पुरतो नयन् महता वेगेन यवनसैन्यमाचक्राम. यवनसैनिकाश्च शूरा अपि स्वजीविते निरिच्छानां, अतिगाढभल्लप्रहारकुशलानां, मातृभूमिस्वातंत्र्यरक्षणतत्पराणां तेषां क्षत्रियाणामाक्रमणेन भूयोभूयो निहता भीतिव्यग्राः शनैः शनैः पश्चादगच्छन्. तांश्च भल्लक्षेप-

व्याकुलानवलोक्य संजातोत्साहाः क्षत्रियवीराः सद्य एव तीक्ष्णाभिरसिलताभिर्हन्तुमारभन्त. यवनसैनिकाश्च प्रथमत एव भल्लाघातजर्जरिताः खड्गाघातानसहमानाः क्षत्रियैर्निहतानगणितान् स्वसजातीयान् पश्यन्तः कथमपि न रणांगणे स्थातुमशकन्. मानसिंहश्च सोत्साहं यतमानोऽपि निवर्तमानांस्तान् पुनरपि न प्रवर्तयितुमशकत्. महाराजप्रतापसिंहस्तु विजयं हस्तगतं मन्यमानो महतोत्साहेनायुध्यत. तांश्च वीरान् सोत्साहमयोधयत.

तदानीमेव परितो वर्तमानेषु वृक्षेषु निलीना वनेचरा बाणान् वर्षितुमारभन्त. युगपदतिवेगेन विसृष्टास्तीक्ष्णाग्रा विषदिग्धमुखा बाणाः सहसा यवनसेनायां निपतन्तोऽगणितान् सैनिकान् प्राणैर्व्ययोजयन्.

ते च वनेचरा अमोघबाणाः प्रथमतो मुख्यानधिकारिण एव प्रजघ्नुः. केचन संधिषु शरैर्निहताः स्वयं भूमितले निपतिताः परानरुन्धन्. अन्ये च बाणहृतासवः पृथिवीतले निपतन्तः स्वकीयानेव खड्गैः प्राहरन्. परे च सिंहनादविवृतमुखा इषुभिर्हता अर्धोच्चारितवाच एव व्यरमन्.

एवं सर्वतः क्षत्रियसैनिकैराक्रम्य पराभूयमानान्निवर्तमानान् स्वसैनिकान्निरीक्ष्य क्रुद्धः स मानसिंहः स्वसैन्यस्य निवर्तनमशक्यं मन्यमानः सहसा स्वसैन्यस्य पुरतः शतघ्नीविभागस्थापनाय स्वसमीपवर्तिनं सेनापतिमादिशत्.

अचिरादेव विकरालमुखानां विधूमितसकलदिङ्मण्डलतयाऽदृश्यमानानां सर्वतः स्थितसादिमण्डलसुरक्षितानां नग्नासिलतालंकृतकरैः शूरैर्यवनसैनिकैः कृतावनानां शतशः शतघ्नीनां मुखेभ्योनिर्गतैर्नूतनैर्हेमन्तसूर्यैरिव ताम्रैरतितप्तैरयोगोलकैराहन्यमानाः

क्षत्रियसैनिकाः शलभाइव प्राणान् विससर्जुः. वाचकाः ? प्राचीनक्षत्रियेषु खड्गेन वा भल्लेन वा युद्धमेव धर्मयुद्धपदवाच्यं प्रचलितमासीत्. यो हि अन्यया कयाऽपि युक्त्या परान्हन्यात्तं च घातकं मन्यमानाः सर्वे जना अनिन्दन्. तेन शतघ्नीविभागस्थापनेऽप्युदासत राज्यस्थानवासिनः क्षत्रियराजाः. यवनास्तु केनापि प्रकारेण शत्रुजयमेवाभिलषन्तः स्वसैनिकहानिं च परिहरन्तः शतघ्न्यादीनि मारकाणि शस्त्राणि निर्माय तैः परेषां राज्यानि भस्मसात्कुर्वन्तः स्वराज्यसीमामवर्धयन्त अस्तु. प्रकृतमनुसरामः.

यवनसैनिकरक्षितासु शतघ्नीषु महता वेगेन लोहगोलकान् क्षिपन्तीषु सतीषु प्रतापसिंहसैनिकाः प्रायो धरणितले निपतिताः परलोकमगच्छन्. अन्ये च तैरसंख्यैर्लोहगोलकैर्जर्जरिताः पश्चान्निवर्तितुमनुत्सुका अपि भयंकरीं लोहगोलकवृष्टिमसहमाना अशक्ता न्यवर्तन्त.

अथ राजतेजयन्तीसमीपस्थः स प्रतापसिंहः स्वसैनिकान् शतघ्नीक्षिप्तैर्लोहगोलकैः पराभूतान्निवर्तमानानवेक्ष्य खिन्नः सोत्साहं मेघनादसमेन गंभीरेण ध्वनिना सर्वानुत्तेजयन् स्वयमेवाग्रे गत्वा तांस्तान् शतघ्नीरक्षणनियतान् सैनिकान् हत्वा तां तां शतघ्नीमात्महस्तगतामकरोत्. स्वयमपि तां निवर्तितमुखीं विधाय शत्रुसैनिकान् लोहगोलकैरवधीत्.

---

## ३

एवं भूयोभूयः प्रयतमानोऽपि महाराजः प्रतापसिंहोऽसंख्यतया यवनसैन्यस्य शाश्वतं विजयं लब्धुमशक्नुवानः स्थिरमतिः सेनापतिरेवाक्रम्य हन्तव्य इति मनसि चक्रे. निहते च सेनापतौ

सारथिरहिता अश्वा इव सैनिका यथेच्छं वर्तमानाः क्षणादेव पराजीयन्ते. यद्यपि यवनसेनायाः प्रधानः सेनापतिर्युवराजः सेलिमनामाऽसीत्. स च वयसा नाधिकस्ततः सेनापतिकर्मकारी राजा मानसिंह एव. तथापि तस्य दिल्लीश्वरसेवकतया तद्धननेन न कोऽपि लाभ इति मन्वानो महाराजः प्रतापसिंहो महता जवेन यवनसेनासागरमध्यस्थं हस्तिस्कंधगतं यवनाधिपतेरकबरस्य पुत्रं सेलीमाख्यमभिलक्ष्य प्रचचाल. तस्मिन् प्रचलिते तदीयाः सामन्ता अपि स्वामिमनोरथं विज्ञाय तमन्वसरन्. महाराजप्रतापसिंहशरीररक्षका अपि अप्रमत्ताः स्वामिनमपालयन्. सैनिकाः क्षत्रिया अपि स्वस्वामिनं यवनसेनापत्याक्रमणोद्यतं जानन्तः सानन्दं तमसाहाय्ययन्. यवनसैनिकास्तथा मानसिंहप्रभृतयो राजानोऽपि तं सेलीमाक्रमणाय प्रयतमानं ज्ञात्वा सावधानतयाऽयुध्यन्त.

शीघ्रमेव तयोः सेनयोः पुनरपि महान् संग्रामः प्रावर्तत. यथाहि क्षत्रियसैनिका यवनसेनाव्यूहं निर्भिद्यान्तःप्रवेष्टुमैच्छंस्तथैव ते यवनसैनिका अपि स्वसेनापतिपालनार्थं तथा स्वव्यूहरक्षणार्थं परं प्रायतन्त.

अथ तीव्रान् श्रीमहाराजप्रतापसिंहस्य तत्सैनिकानां च खड्गप्रहारानसहमाना यवनसैनिकाः पुनरपि पश्चान्निवर्तमाना व्याकुला अभवन्. तांश्च व्याकुलान् वीक्ष्य महाराजः प्रतापसिंहः पुनरपि महता वेगेनोच्चारितजयशब्दो भीतं मेषसमुदायं व्याघ्रइव सहसा तद्यवनसैन्यं प्रविश्य मानसिंहमशोधयत्. स्वस्वामिनं निर्भिन्नयवनसेनाव्यूहमवलोक्य संजातानन्दं द्विगुणितोत्साहं तत्कृत्स्नमपि क्षत्रियसैन्यं तेनैव मार्गेण प्रविश्य तां यवनसेनां द्विधाचक्रे. कृत-

व्यूहान्तःप्रवेशः प्रतापसिंहो बहुषु स्थलेषु मानसिंहमन्विष्य तमलभमानः क्रोधान्धनयनः सत्वरं समीपस्थं युवराजहस्तिनमेव तीव्रेण खड्गेन प्रजहार.

तस्य युवराजस्य शरीररक्षका सामन्ता अन्ये च शूरा यवनास्तं कालमिव विकरालनयनं, विस्तीर्णकेशपाशं, अतिपरिश्रमस्वेदांकुरमंडितभालप्रदेशं, अनेकवीरशिरश्छेदवित्तया, रुधिराक्तया ऽसिलतया सालंकृतकरं, तेजसा द्वितीयं सूर्यमिव, सत्यमेव प्रतापिनं महाराजं सिसोदियावंशदीपं प्रतापसिंहमवलोक्य भीत्या किंकर्तव्यमूढा अभवन्. केचन च युवराजं रक्षितुकामाः सहसा प्रतापसिंहमक्रमन्त. स च रणधीरस्तान्यवनान् कदलीस्तंभानिवानायासेन दूरीकृत्य युवराजहस्तिपालकं हस्तिपकमेवावधीत्. निहते हस्तिपके स हस्ती यावद्भयाकुल इतस्ततो धावितुमारभते तावदेव श्रीप्रतापसिंहः स्वाश्वं चेतकमुन्नमयतिस्म. सोऽपि परमचतुरोऽश्वः स्वामिमनोरथं ज्ञात्वा तस्मिन्नेव क्षणे स्वाग्रपादौ हस्तिदन्तयोरारोप्य तस्थौ. तदानीमेव तीक्ष्णाग्रं, दुःसहप्रहारं, निहतानेकवीरसमूहं, महान्तं भल्लं तस्य युवराजस्य कण्ठदेशमालक्ष्य महता क्रोधेनामुंचत् प्रतापसिंहः. तस्मिन् भल्ले स्वलक्ष्यं प्रति वेगेन गच्छति सत्यकस्मादस्माकं दुर्दैवतो वा यवनानां सुदैवतो वा दिल्लीपतेः सुकृतेन वा मेवाडाधिपस्य दुरितेन वा स च हस्ती ससंभ्रममचलत्. तेन च्युतलक्ष्यः स भल्लस्तस्य हस्तिस्कंधगतस्य युवराजस्य वाहनं निर्भिद्य तस्थौ. तं लक्ष्यच्युतमवेक्ष्य पुनरपि प्रहर्तुकामे महाभागे प्रतापसिंहे तावतः प्रबलस्य चेतकनाम्नोऽश्वस्य भारं दन्ताभ्यां वोढुमसहमानः कृतचीत्कारशब्दोऽव्यवस्थितं सेनायामितस्ततोऽधावत युवराजगजः.

राजा मानसिंहश्च श्रीप्रतापसिंहेनाक्रान्तं प्रहृतं च दैवेन रक्षितं च स्वभागिनेयं युवराजमालक्ष्य सर्वामपि यवनसेनां कटुभिरुक्तिभिर्निर्भर्त्सयंस्तं महाराजं वेष्टितुं स्वानादिदेश. सर्वे यवनसैनिका अपि युवराजाक्रमणेन क्रुद्धास्तं प्रतापसिंहं सूर्यं मेघा इवावेष्टन्त. परन्तु प्रलयझंझावात इव मेघपटलं तद्यवनसैनिकचक्रवालं निर्भूय पुनरपि स्वसेनायां व्यराजत स महाभागः प्रतापसिंहः.

---

४

राजा मानसिंहस्तं प्रतापसिंहस्य प्रतापं वीक्ष्य भीतो वेगेन योद्धुं सैनिकान् प्रोत्साहयतिस्म. तेन प्रोत्साहिता यवनसैनिका अपि सोत्साहमयुध्यन्त. क्षत्रियाश्च निष्फलप्रयत्नस्याऽपि स्वस्वामिनो लोकोत्तरं पौरुषमवलोक्य सानन्दाः पुनरपि सवेगं युयुधिरे. यथाहि हस्तिगतं युवराजमभिलक्ष्य महाराजः प्रतापसिंहः समातचक्राम तथैव सुवर्णसूत्रमयं राजच्छत्रमभिलक्ष्य यवनसामन्ता अपि चक्रमुः. परन्तु शूराः क्षत्रियास्तेषामाक्रमणानि विफलीचक्रुः. महाराजः प्रतापसिंहोऽपि पूर्ववद्यवनसैन्यं द्विराक्रम्यानेकान् यवनसामंतान् यमालयं प्रेषयत्.

अथ क्रमेण घनीभवत्समीपमागच्छत्क्रोधान्धं लब्धसाहाय्यं यवनसैन्यमालोक्य पुनरपि तदाक्रमणायोद्यतं वीरसिंहं प्रतापसिंहं विनयेनावदत्झालावंशभूषणो मानाख्यो भूपः—राजन्! नास्ति भूयोऽपि समुद्रवेलेव वर्धमानस्य यवनसैन्यस्याक्रमणेऽनुकूलः समयः. सम्प्रति हि समरदेवताप्रदत्तैर्भूषणैरिव पराक्रमतोषितेभ्यः प्रतिभटेभ्यः संपादितैर्वीरचिन्हैरिव भल्लस्य त्रिभिरेकेन लोहगोलकस्य, त्रिभिः खड्गस्य, गाढैः प्रहारैरंकितो ग्रीष्मसमये प्रफुल्लः

पलाशद्रुम इव राजसे. एभ्यश्च शस्त्रप्रहारेभ्यो निर्गतबहुलरुधिरो म्लान इवालक्ष्यसे. एष तव राजचिन्हमण्डितो भालदेशः समरदेवतावितीर्णेन मौक्तिकजालकेनेव स्वेदांकुरजालेन मण्डितो विभाति. अतिपरिश्रमेण दूरं प्रवहद्भिः श्वासैः कम्पमानकपाटविशालवक्षा अतिश्रान्त इव दृश्यसे. एष तव कराग्रे विलसन् शत्रुहृदयविदारणदक्षः खड्गोऽपि रुधिरारक्तः परिम्लान इव भाति. एतत्ते सौभाग्यशालि लोहकंचुकमपि अनवरतनिहतयवनकण्ठनालनिर्गतरुधिरधाराभिरासक्तं विचित्रं शोभते. अयं च त्वदपसव्यकरे विराजमानो भल्लः शत्रुकण्ठविदारणवित्त आमूलमसृक्धारी पुनरपि योद्धुमनीहतइव. एष च मूर्तिमान् पराक्रम इव चेतकोऽश्वोऽतिविस्तीर्णाभ्यां नासिकापुटाभ्यां दीर्घान् श्वासान् मुञ्चन् विश्रमितुमिच्छति. एते चाविरतं निपतन्तः प्रलयमेघा इव यवनसेनासमूहास्त्वामाक्रन्तुमिच्छन्ति. इमे च यवनसामन्तास्त्वां युवराजाक्रमिणं वीक्ष्य कोपाकुलास्त्वामपि तथैवाक्रन्तुं प्रयतन्ते. एष च क्रुद्धः कुलांगारो मानसिंहस्तव प्रतापदर्शनाद्भीतो बलादेव तव निग्रहार्थं सर्वान् स्वाश्रितान् प्रेरयति. तस्मात्स्वामिन्? अयं चास्माकं विजयसमयो न दृश्यते. इमेऽस्माकं शूरा मेवाडललामभूताः क्षत्रियसैनिकाः प्रतिक्षणं विरलीभवन्ति यवनाश्च परिवर्धन्ते. तदस्माद्रणादपसरन्तु स्वामिचरणाः. जीवत्सु युष्मासु पुनरपि मेवाडमेदिनी विजयिनी भविष्यति. अस्मादृशाश्च सेवका अप्यगणिता आगमिष्यन्ति. तदविचार्य यत्किंचिदपि समरादपसरन्तु भवन्त इति जगाद.

महाराजः प्रतापसिंहोऽपि विजयाशायामुदासीनः सर्वं तत् तेन झालारावेणोक्तं सत्यं मन्यमानोऽपि वहिस्तथाऽदर्शयंस्तं जगाद.

सामन्तश्रेष्ठ? यद्यपि यदुक्तं त्वया तत्सर्वमपि सत्यं तथापि नाहं समरांगणं त्यक्ष्यामि. येषां कुलेऽहं संजातस्तेषां मध्ये कोऽपि अपयशोमलिनमुखो न निवृत्याजीवत्. तदहमेव क्षुद्रस्य गामिनः क्षणभंगुरस्य जीवस्य लोभेन सर्वमपि कुलं कलंकयामि! सर्वे स्वर्गवासिनो मदीयाः पूर्वजा मां च रणान्निवर्तमानं वीक्ष्य दुःखाकुला अन्यैरपहसिताः कथंचिज्जीविष्यन्ति. महाभाग? इतोऽपसृतस्य मे चिरजीवित्वं यदि स्यात्तदा वरं. तत्त्वसंभवि. तदा कुतः स्वकुलकलंकस्य लाभेच्छा.

किंच, यदि युष्मानस्मिन्समरदावानले निक्षिप्य स्वशरीरसौख्यलाभाय राजप्रासादं गमिष्यामि तदा सर्वेऽपि जना मां किं वदिष्यन्ति. सर्वे सेवकाश्च मां वक्ष्यन्ति. मम हि राजत्वं किं सुखोपभोगार्थमेव? अशक्यमिदं यद्युष्मासु मदर्थं युध्यमानेषु स्त्रीवत्प्रतापसिंहः स्वकीयान् सामन्तान् सेवकांश्च समरे निक्षिप्यैकाकी यवनाक्रमणमसहमानो युद्धात्पलायतेस्मेति प्रवादश्रवणं. किंबहुना—सामन्तराज! मम हि युष्माभिः सह महता शौर्येण यवनान्निघ्नान् स्वखड्गवल्लीन् कुर्वतोऽगणितशस्त्रप्रहारालंकृतदेहस्य. जयेन वा पराजयेन वा यथादैवं भवितस्य, परमप्रियं परमसौभाग्यप्राप्ये मातुरंकइव मेवाडमेदिनीविभागे शरीरं शेष्यते नतु अपजयाकीर्तिमलिनस्य तूलमये मृदुले शयन इति.

एवं ब्रुवाणस्य श्रीमन्महाराजाधिराजस्य श्रीप्रतापसिंहस्य स्वसामन्तेषु तथा सेवकेषु निरतिशयां प्रीतिमवलोक्य झालाराव आत्मानं धन्यं मन्यतेस्म. अस्तौच्च परमात्मानं स्वस्वामिनो रक्षणाय.

अत्रान्तरे पुनरपि लब्धसाहाय्या यवनाः क्षत्रियसेनां जवेना-

क्रन्तुमारभन्त. क्षत्रियसैनिकाश्च तन्निवर्तनार्थं प्रयतमाना अपि असहाया नाशक्नन्. तेन ते क्रमेण शनैः शनैः पश्चादपासरन्. तांश्चापसरतो यवनांश्च वर्धमानबलान्वीक्ष्य स झालारावः समीपवर्तिनं महाराजं साञ्जलिबन्धं विज्ञापयामास.

स्वामिन्? मेवाडाधिपते? पश्येमान् वर्धमानान् यवनान् क्षीयमाणांश्च क्षत्रियान्. साम्प्रतं विजयोऽस्माभिर्न लभ्यत एव. तदधुना युक्तायुक्तविचारः क्रियतां. यद्यपि त्वदुक्तं सर्वमपि सत्यं तथापि समरादपसरणं न त्वद्धितार्थमहं वदामि किंतु जन्मभूमेर्मेवाडमेदिन्या लोभेन. एतस्या दीनायास्त्वदेकशरणाया वराक्या मेवाडमेदिन्या लोभो मामित्थं मुखरयति. अस्मात्समरान्निर्गत्य जीवन्भवानिमां पुनरपि स्वातंत्र्यशालिनीं कर्तुं प्रभवति. अस्मासु च सर्वेषु स्वर्गं गतेषु सत्सु एषा कस्य मुखं पश्यतु. कश्चैनां पुनरपि स्वातंत्र्यभागिनीं करिष्यति.

राजन्? अस्मासु निहतेष्वपि यदि नायको जीवेत्तदा पुनरपि स स्वजयलाभार्थं प्रयतेतैव. एतत्सर्वं जानन्त एवेमे यवनास्तदधिपाश्च राजछत्रमभिलक्ष्य प्रयुध्यन्ते. तत्प्रसीद. नाथ? अस्मासु तथा तव प्रियायां मेवाडमेदिन्यां यद्यवशिष्टं प्रेम तदा शीघ्रमेव रणादपसृत्यात्मानं पालय. अहं च त्वदाक्रमणोद्यतान् रिपूंस्त्वत्स्थानेस्थित आत्मानमेव स्वामिचरणान् भावयन् रोत्स्यामि. एष एवावसरो रणांगणादपसरणस्येति.

महाराजः प्रतापसिंहश्च स्वसेनाक्षयविभावितपराजयः पुनरपि जयलाभार्थं प्रयत्नांश्चिकीर्षुस्तं झालावंशचन्द्रं मानराजमाश्लिष्य अन्यांश्च सामन्तानापृच्छ्य साश्रुनयनः कथमपि स्वराजधानीं

गन्तुं चेतकमचोदयत्. स्वामिसमावस्थोऽपि विश्वासपात्रं सोऽश्वस्तस्मिन्नेव क्षणे समरभूमिं विहाय कुमळनेरदुर्गं गन्तुं चचाल.

अथ पश्चिमदिगंगनाश्लेषेच्छयेव प्रधावति सूर्ये राजा मानसिंहः सत्वरं विजयलाभाय सर्वानपि स्वसामन्तान् सोत्साहं योद्धुमाज्ञापयामास. तेऽपि च विजयाशाशालिनो जवेन युध्यमाना दुर्निवार्या अभवन्. क्षत्रियाश्च यथाशक्ति विहितप्रतिक्रिया अपि विजयं नाशासतेस्म. ततश्च संध्यासमयात्पूर्वमेव विजयलाभेच्छया प्रोत्साहितास्ते यवना ऐकमत्येन राजच्छत्रमुद्दिश्यैवाक्राम्यन्. क्षत्रियवीरसिंहैर्विफलीकृतेष्वपि तेष्वाक्रमणेषु पुनः पुनरप्याक्रममाणं तद्यवनसैन्यं श्रीमहाराजप्रतापसिंहस्य च्छत्रं परितः प्रादुर्बभूव. झालारावप्रभृतयः क्षत्रियसामन्तश्रेष्ठाः स्वस्वामिच्छत्रपालनेऽत्युत्का व्यूहाकारेण तत्परितस्तस्थुः. स्वामिभक्तो झालारावः प्रतापसिंहस्य स्थाने स्थित्वा सर्वानपि शत्रून्मोहयामास. शत्रुसैनिकाश्च तमेव झालारावं प्रतापसिंहं मन्यमानाः कोपाकुला अविलम्बेन स्थितान्युध्यमानान् सामन्तान्निहत्य तमपि महाभागं प्राहरन्. सोऽपि च यथाशक्ति यवनसैनिकान्निहत्य स्वसुकृतैर्लब्धं स्वर्गमगात्. तं च त्यक्तकलेवरं प्रेक्ष्य सर्वे यवनसैनिका लब्धविजयाः सिंहनादान्विससर्जुः. कश्चन सामन्तस्तद्राजछत्रं निभृतं गोपयित्वा गृहीत्वा राजधानीं कुमळनेरदुर्गं जगाम. वाचकाः! तदानीं भगवान् सहस्ररश्मिरपि स्ववंशजानां पराजयं तथा प्राणहानिं च निरीक्ष्य दुःखाकुल इव पश्चिमे तीर्थराजे स्वप्राणानपि हातुं प्रायात्. सज्जनाः! इदं खलु झालारावस्यालौकिकं कर्म, असाधारणा स्वामिभक्तिः, निरातिशया मातृभूमिप्रीतिर्यावच्चन्द्रदिवाकरं स्थास्यत्येव. अस्तु. धन्या सा राजस्थानभूः, धन्याश्च तद्भवा नराः

## ( ५ )

यदा च महाराजः प्रतापसिंहस्तस्य प्रियमित्रस्य झालारावस्य वचनमंगीकृत्य समरभूमेर्निर्गतस्तदा स द्वाभ्यां यवनसैनिकाभ्यां दृष्टः. तौ च तदानीमेव समरं विहाय तमन्वसरताम्. यद्यपि महाराजः प्रतापसिंहः पराजयेन खिन्नः स्वसामन्तमण्डलत्यागेनोद्विग्नः पथि न किंचिदपि विभावयामास तथापि स्वामिकार्यचतुरो विश्वासी चेतकस्तं वहन्नतिवेगेन प्राधावत. मार्गे च समागतान् जलप्रवाहान् वा शैलखण्डान् वा कंटकवृक्षान् वोल्लंघ्य स्वहृदयमिव महाराजं जुगोप सोऽश्वराजः. स च सकले दिनेऽगृहीतभक्ष्यजलो विविधानां स्थलानामुड्डीनेन लंघनाच्छ्रान्तोऽतिविस्तीर्णनासिकापुटविगलत्फेनपटलो म्लानो घर्माविलांगः कथं कथमपि स्वामिप्राणरक्षणार्थमधावत्. यद्यपि तौ यवनसादिनौ समीचीनतया महाराजं प्रतापसिंहं जानन्तौ तस्य बन्दीकरणाय महता वेगेनाधावतां तथापि चेतकस्याऽतिजवित्वेन न ताभ्यां स गृहीतः.

अथ नूतनाश्वौ तौ सादिनौ परं वेगेन धावन्तौ कथमपि तं क्षीयमाणबलमपि प्रधावन्तं चेतकं दृष्टिविषयमकुरुताम्. तयोरश्वावपि ज्ञातस्वामिमनोरथाविवोच्चैर्हेषारवं चक्रतुः. विषादनिमग्नमनाः प्रतापसिंहोऽकस्मादागतं तं रवं निशम्य प्रकृतिस्थः पश्चादागच्छन्तौ तौ यवनसादिनावपश्यत्. तौ च निरीक्ष्य संतापखिन्नः स मनस्यचिन्तयत्—अहो मे दुर्दैवविलसितं. मया हि मेवाडमेदिन्युद्धारार्थं मित्रवचनमंगीकृत्य समरभूस्त्यक्ता. अपकीर्तिश्च संपादिता. तथापि मामनुगच्छत एवेमौ. अहं हि सम्प्रति मित्रवियोगेन पराजयदुःखेन रुधिरापसरणेन च क्षीणबलः कथ-

माभ्यां प्रबलाभ्यां योद्धुं समर्थोभवामि. इयमेव हि सत्वपरीक्षा नाम. माता मेवाडमेदिनी मम मनः परीक्षते. धन्यासि मातः! एष त्वयि बद्धस्नेहः प्रतापसिंहः प्राणात्ययेऽपि न त्वां विस्मरिष्यतीति सत्यमिति.

एवं चिन्तयतो वेगेन धावमानस्य तस्य प्रतापसिंहस्य पुरस्ताद्विस्तीर्णा सरित् समायाता. तत्रैव तावपि यवनसादिनौ सजवं समागतकल्पावेव. महाराजः प्रतापसिंहस्तौ समीपमागतौ निरीक्ष्य चेतकं नद्युल्लंघनार्थमचोदयत्. सत्वशक्तोऽपि स्वामिनियोगानुपालनतत्परो लीलयैव तां सरितं समुल्लंघ्य परतीरमगात्. प्रतापसिंहश्च तस्मात्संकटात्क्षणमात्रं मुक्त ईश्वरमस्तौत्.

तदानीमेव रुग्णस्यौषधमिव दरिद्रस्य धनलाभमिवाकस्मादमृतवाणीमिव 'बन्धो? मेवाडाधिपते? प्रतापसिंह? मा बिभीहि. अहं खलु त्वदीयो बन्धुः शक्तिसिंहोऽज्ञानेन विहितयवनसाहाय्योऽपि त्वदीयं निरतिशयं प्रतापं समरांगणेऽवलोक्य विस्मितः संजातोपतापः क्षमायाचनार्थमागच्छामि. तदधुना क्षमादानेन मामनुगृहाण' इति वाणीमश्रृणोत्. तां च वाणीं कर्णपुटाभ्यामाकर्ण्य नितान्तं विस्मितो महाराजः प्रतापसिंहः परमात्मन इमां कृपामेव मन्यमानः पराजयदुःखं विस्मृत्य श्रान्तात्तस्माच्चेतकाश्वादवतीर्य तस्यागमनं प्रतिपालयंस्तस्थौ. अचिरादेव शक्तिसिंहः समीपमागत्य स्वाश्वादवतीर्य श्रीमहाराजप्रतापसिंहस्य पवित्रयोश्चरणयोः पपात. निरतिशयप्रेम्णा पापक्षालनार्थमेव नूनं बहिःसमागच्छद्भिरश्रुपटलैस्तं चरणसरोजयोरसिंचत्.

महाराजः प्रतापसिंहोऽपि तमुपतपन्तं विपदि साहाय्यकारिण-

मुत्थाप्यातिदीर्घाभ्यां पीवराभ्यां स्वभुजाभ्यामाश्लिष्य मस्तकेऽजिघ्रत्. अवोचच्च—बन्धो? शक्तिसिंह? अस्मिन्समये भगवता मम साहाय्यार्थमेव त्वं प्रेषित इति मन्ये. यदि त्वं नागामिष्यस्तदा श्रान्ताश्वः क्षीणबलः कथमहमेकाकी आभ्यां यवनाभ्यां योद्धुं शक्तोऽभविष्यम्. अस्मिन्समये साहाय्यं कुर्वता त्वया महदुपकृतमिति. शक्तिसिंहश्च तादृशीं दीनां वाणीं निशम्य व्याकुलः—महाराज? मेवाडाधिपते? कर्तव्ये कर्मणि कृते क उपकारः. मया हि त्वदाज्ञावर्तिनाऽधुना यवनैः समं योद्धव्यमासीत्. तद्विहाय स्वदेशजनगुरुद्रोहिणा मया यवनाः साहाय्ययिताः. राजन्? तावन्मम कुटिले हृदये त्वदीयो द्वेषोऽवसद्यावत्स्वमातृभूमिस्वातंत्र्यार्थं सामन्तमण्डलसमन्वितं यवनैः समं युध्यमानं त्वां समरेऽहं नापश्यम्. त्वां हि भीष्ममिव पराक्रामन्तं शत्रुवीरसम्मानितवीर्यं, मानसिंहप्रभृतियवनपक्षीयवीरैः प्रस्तुतं वीक्ष्य खिन्नः पुनरपि क्षमायाचनार्थमत्रागतोऽस्मि. यदा हि त्वं तस्य महाभागस्य झालारावस्य वचनात्समरभूमिं विहाय निर्गतस्तदानीमेवोभावपि निर्गतौ यवनसादिनौ त्वां बन्दिनं विधातुं. अहमपि तदैव श्रान्ताश्वं त्वां च वीक्ष्यानिष्टं भावयन्सत्वरं तावनुजगाम. जन्मत आरभ्याद्यैव त्वदीयेन पवित्रेण शरीरस्पर्शेन विनष्टपापः पवित्रीकृतोऽस्मि इति.

महाराजः प्रतापसिंहः स्वबन्धोः शक्तिसिंहस्येमामद्भुतामश्रुतपूर्वां वाणीं निशम्य संजातानन्द उवाच—बन्धो! अद्य खलु न मया पराजयो लब्धः किंतु दिल्लीपतिना. यतस्त्वादृशो भ्राताऽस्मिन्समये मामसाहाय्ययत्. धन्याऽसि मातः? मेवाडमेदिनि?

त्वत्कृपयाऽहं पुनरपि दिल्लीपतिं शीघ्रमेव पराजेष्य इति. एवं जल्पनिमग्नौ तावकस्माद्भयंकरं वाजिरवमशृणुताम्. श्रुत्वा च साश्चर्यौ सत्वरं धावमानौ चेतकमश्वं भूमौ निपतितमपश्यताम्. स च स्वामिभक्तोऽश्वस्तस्मिन्दिने प्रभातकालमारभ्य नानाविधानि दुष्कराणि कर्माणि कुर्वन् अतिश्रान्तोऽभूत्. जलबिन्दुमपि नापिबत्. शस्त्राघातांकितदेहो रुधिरक्लिन्नगात्रस्तथैव स्वयजमानं पृष्ठे वहन्नतिवेगेन पलायमानो मार्गस्थान्नदीपाषाणानुदलंघयत्. तेनाऽपि क्षीणबलः स्वबन्धुना शक्तिसिंहेन समं संलपितुं भूमिमवतीर्णे प्रतापसिंहे महता कष्टेन द्वित्राणि पदानि गत्वा भूमिनिपतितः प्राणान्तिकां वेदनामन्वभवत्. महाराजः प्रतापसिंहः स्वस्याश्वस्येमामवस्थामवलोक्य नितान्तं दुःखितोऽभवत्. चेतकोऽपि स्वस्वामिनं सुरक्षितं बन्धुना सह मीलितमवलोक्य संतुष्ट इव दीर्घविस्तृताक्षः किमपि ' स्वामिन् ! अहमधुना स्वर्गं गच्छामि तदनुजानीहि मामिति ' संलपन्निव प्रस्फुरदोष्ठपटलः, ' इमां मातृभूमिं पारतंत्र्यनरकादुद्धर ' इति दर्शन्निव पादाहतभूमिः, शान्तेन मनसा स्वयजमानस्य मुखं निरीक्षमाणो निश्चेष्टोऽभवत्. दुःखितोऽपि महाराजः प्रतापसिंहस्तस्य मुखे स्वकरेण जलं निक्षिप्याशोचत्. स तु चेतकोऽश्वः स्वामिकरकमलस्पर्शसुखं मस्तकेऽनुभवन्स्वप्राणानजहात्. प्रतापसिंहश्च प्रियबान्धवेन वियुक्तइव दीर्घकालं शोचन्नन्ते तं चेतकं तत्रैव भूमिसात्कृत्य तदुपरि चतुष्कमबध्नात्.

अथ प्रतापसिंहः स्वबन्धुमामंत्र्य तदीयमोंकारनामानमश्वमारुह्य स्वराजधानीं प्रत्याययौ. शक्तिसिंहोऽपि यवनसादिनोऽश्व

मारुह्य मानसिंहस्कन्धावारं प्रत्यागच्छत्. युवराजश्च तमेकाकिनं प्रत्यागतं समीक्ष्य साश्चर्यः सहसाऽपरयोस्तयोर्यवनसादिनोर्वार्तामपृच्छत्. स शक्तिसिंहो यवनानां चित्तवृत्तिं जानन् ' निहतौ तौ समरसिंहेन प्रतापसिंहेन ' इति मिथ्यैवावादीत्. राजा मानसिंहस्तथा युवराजः सेलीमस्तयोर्यवनसादिनोः शौर्यं तथा प्रतापसिंहस्य तत्कालिकीं निर्बलतां मनसि कुर्वाणौ शक्तिसिंहस्य भाषणं मिथ्याऽमन्येताम्.

अथाभयं दत्वा पृष्टः स शक्तिसिंहः सत्यं वृत्तमकथयत्. तन्निशम्य युवराजो नितान्तं कुपितोऽपि प्रदत्ताभयवचनो न किमपि कर्तुं प्राभवत्. ततश्च मानसिंहानुमत्या युवराजः सेलीमस्तं शक्तिसिंहम् ' शक्तिसिंह? अस्मत्पक्षस्थेन त्वयाऽस्माकं शत्रुः प्रतापसिंहो रक्षित एतदनुचितं कृतं. तत्राप्यस्मदीयान्निहत्येति महदनुचितं. तदत्र तेऽवस्थानमस्मभ्यं न रोचते. तस्मात्त्वमधुनैवेमं स्कन्धावारं विहायान्यत्र गच्छेति ' आज्ञापयामास. निस्पृहः शक्तिसिंहोऽपि तदानीमेव स्वीयमश्वं गृहीत्वा तस्मात्स्कंधावारान्निर्गत्य कुमळनेरदुर्गमागच्छन्मनस्यकरोत्. यद्यपि देवसमो महाप्रतापी प्रतापसिंहो मया पूर्वं दृष्ट एव तथापि न तदादरेण दर्शनं किंतु विपन्निवारणार्थमेव. अधुना च तं महात्मानं यवनपक्षं विहाय निर्गतोऽहं कथं रिक्तहस्तो राजसभायां द्रक्ष्यामि. तत्सम्प्रति शौर्येण किंचिन्नूतनं संपाद्य तदेवोपायनीकृत्य मेवाडाधिपतिर्द्रष्टव्य इति. चिन्तयित्वा चैवमचिरादेव मार्गस्थं यवनाधिपतिरक्षितं भाईन्सोरनामकं दुर्गमाक्रम्यात्मसादकरोत्. तदेव दुर्गं नूतनार्जितैरन्यैर्ग्रामैः सममुपायनीकृत्य राजसभायां ज्येष्ठबन्धुं

मेवाडपतिं प्रणनाम. महाराजः प्रतापसिंहोऽपि महताऽनन्देन स्वीकृतोपायनस्तदीयान्सर्वानप्यपराधान्क्षन्त्वा तं स्वसेनापतिमुख्य मकरोत्. तद्दुर्गमन्यांश्च ग्रामान्पारितोषिकत्वेन तस्मा अदात्. शक्तिसिंहोऽपि तदीयामाज्ञां शिरसा स्वीकृत्यानन्देन तस्थौ.



# ११ अरवलीशैलसमाश्रयः.

१ यवनानांक्रौर्यम्.
२ वर्षासमयः युद्धसन्नाहः.
३ राजधानीदुर्गाक्रमणम्.
४ इतरदुर्गहरणम्.
५ पर्वताश्रयः.

## ( १ )



अथ समुदिते भगवति भास्करे, अपनीतमालिन्यासु दिशासु, ते सर्वेऽपि विजयिनो यवनाः स्वपक्षक्षयमवेक्ष्य क्रुद्धाः पुनरप्यस्माद्युद्धादवशिष्टा रजपूतक्षत्रिया महाराजं प्रतापसिंहं मा साहाय्ययान्त्विति मन्यमानाः पराजयखिन्नानां सर्वतः परिवर्तमानासु लतासु निलीनानां, क्वचिद्वनतनदीतीरेषु तथा वृक्षेषु निविष्टानां क्षत्रियाणां शिरःच्छेदं विधातुमैच्छन्.

यद्यप्यस्मिन्विषये जात्या क्षत्रियो मानसिंहो नात्यनुकूल आसीत्तथापि स सेवकतया न तान्निषेद्धुमशकत्. मुख्यो युवराजश्च प्रतापसिंहाक्रमणेन भीतः क्रुद्धश्च तथाकर्तुमन्वमोदत.

अचिरादेव युद्धमदोन्मत्तास्ते यवनसैनिकाः प्रथमतः पुरतः स्थायिनो युध्यमानान्क्षात्रियान्हत्वा ततः सर्वस्मिन्परितः प्रदेशे

यमकिंकरा इव समचरन्. अस्मिन् शिरःच्छेदप्रसंगे राज्ञो मेवाडाधिपतेः संबन्धिनस्तथाऽन्ये सम्माननीया जनाः पंचशतानि स्वर्गमगच्छन्. ये चाप्राणान्तं युध्यमानाः क्षत्रियश्रेष्ठा यवनसेनाक्षयमकुर्वंस्तेषां भुविपतितानां दिवंगतानामपि शरीराण्यन्विष्य शिरांसि चिच्छिदुः. तथा यो ग्वाल्हेरनराधीशो बाबराक्रान्तराज्यः प्रतापसिंहसमीप एवावसत्, सोऽपि स्वपुत्रेण तथा स्वकीयैः शतत्रयमात्रैः पुरुषैः सह समरभूमावशेत. एवं सन्मान्यः स्वामिभक्त्यादर्शः क्षत्रियकुलतिलको झालारावस्तथा तदीयाः सामन्ताश्च सार्धशतसंख्याकाः समरांगणे त्यक्त्वा देहं स्वर्गमगच्छन्. वाचकाः ! अस्मिन्युद्धे सैनिकाः कियन्तो मृता इति संख्यैव नास्ति. अनेन युद्धेन कृत्स्नोऽपि मेवाडदेशः प्ररोदनपरसकलजनः, बालवृद्धावशिष्टजनः स्त्रीमयोऽदृश्यत. यवनसादिनश्च सर्वत्र पर्यटन्तो मार्गे निवसतो ग्रामवासिनोऽपि अघ्नन्. दिल्लीतो हळदीघाटगमनमार्गे खलु बाला वा युवानो वा वृद्धा वा क्षत्रियकुलसंभवा जना ये ये समुपलब्धास्तान्सर्वानपि यवना यमालयं प्रेषयामासुः.

वाचकाः ! यद्यपि युद्धेऽन्यायमूलके नास्ति नीतेर्वा तत्वज्ञानस्य वाऽवसरः. यतो बलाढ्येन राज्ञा बलातिरेकेण वा युक्त्या वा यत्र दुर्बलो विजीयते तत्र युद्धापरपर्याये कर्मणि न्याय्यान्याय्यविचारसंभव एव कुतः ! परन्तु यथायथा विषयेच्छा प्रवर्धते तथा तथा भूतदयादयो नीतिप्रकारा दूरीभवन्ति. अत्र च निदर्शनं क्षत्रिययवनयोर्युद्धे एव. क्षत्रिया अपि राज्यस्य लोभेनायुध्यन्त परन्तु न ते युध्यमानजनातिरिक्तानुदासीनानघातयन्. परदारांश्च नास्पृशन्. नापि बालान् दासीचक्रुः. ते तु एतानि पापान्यमन्य-

न्त. तेन च युद्धप्रसंगस्तावान् भयंकरो नाभवत्. यवनास्तु लोभातिरेकदूषितान्तःकरणाः शत्रुदेशमाक्रम्य युध्यमानाः सर्वमप्यपाहरन्. विशेषतश्च परदारसंसर्गलोलुपास्तेऽन्यधर्मपत्नीरेव स्वभोग्या अकुर्वन्. लीलयैव बालानपि शूलोत्तंसानकुर्वन्. वृद्धानपि निरुपद्रवांस्तेऽवधिषुः.

सज्जनाः ? अत्र क्षणमात्रं ताटस्थ्येन विचार्यमाणे युद्धे क्षत्रिया एव श्रेष्ठा इति भाति. यतो युध्यमानस्य नायं हेतुर्यज्जनहत्या, किंतु प्रबलानामन्यायेन वर्तमानानां दुष्टानां शासनं. तद्युद्धेन लभ्यते. तथाच निष्कारणजनहिंसया कोवा लाभः. क्षत्रियाश्च न कदाप्येवमकुर्वन्. तेन विद्वांसो जना अवश्यं युद्धनीतौ क्षत्रियापेक्षया हीना एव यवना इति वदेयुः. यथा तथा वा भवतु. हळदीघाटयुद्धे निःसंशयं पशुवच्चेष्टितं यवनैः.

( २ )

अथ तां यवनसेनां राजधान्याक्रमणायाग्रे गच्छन्तीं क्रूरैर्घनगर्जितैःभर्त्सयन्निव, वृथा बालवृद्धघातनेन धन्यंमन्यां तां सेनां करकावृष्टिभिर्जिघांसन्निव, विकरालाऽचिरद्युतिखड्गलताचेष्टितैर्भीषयन्निव, सततनिपतदासारसलिलताडनैस्तादृशादुद्यमात्तां निवर्तयन्निव, महाराजप्रतापसिंहपक्षपातीव विशालशरीरः कृष्णो वनेचर इव प्रतिबन्धको बभूव वर्षासमयः. तदानीं च ते यवनाः क्रूरा अपि शूरा अपि तस्य भयंकरं, सर्वतोजलातिरेकाच्छादितमार्गचिन्हं, सततनिपतज्जलासाराक्लिन्नसर्वसामुग्रीकं, सदा प्रावृतसूर्यमण्डलं, स्वरूपं निरीक्ष्य कातरा अभवन्. विशेषतश्चारवलीशैलमध्ये ते यवनाः परमनिम्नासु जलपरिपूर्णासु वनस्थलीषु

निपातेन, वर्षातिरेकनिपतच्छैलखंडानां प्रहारेण, झंझावातानिर्भिन्नवृक्षगणपरिपतनेन, वज्रनिपातभिन्नशैलशिखरशिलोच्चयपरिपातेन, अकस्मादगम्यजलपरिपूरणेन वननदीनां, दुर्लभेनान्नेन, क्रूरवनपशुव्याघ्रादीनामाक्रमणैः, सर्वतः संचरद्वनेचरशरक्षेपैरुद्वेजिताः स्वराजधानीं दिल्लीनगरं गन्तुं प्रारभन्त. तदानीं च तत्र वर्तमानानामपि तेषां स शैलराजः कुसुमितकदम्बगुच्छमौक्तिकजालकविराजमानमूर्धा, मेघस्तनितश्रवणनृत्यन्मयूरकलापमणिमधुरकण्ठभागः, प्रतिपल्लवविराजमानोदबिन्दुमौक्तिकालंकृतसकलगात्रः, अविरलनिपतन्निर्झरमनोहरः, विकसितवनलताकुसुमगन्धहृदयहारी, प्रधावन्मृगगणनयनलहरीरुचिरः, क्वचिन्मेघपटलप्रावृतत्वाददृश्यः क्वचिच्च प्रखररविकिरणभूषितो निसर्गतः सुन्दरस्तेषां नयनानि नानन्दयत्. सा तु यवनसेनाऽग्रे गमनान्निवृत्ता स्वावासस्थानं गन्तुं यदा प्रारभत तदा ते वनेचरास्तथाऽवशिष्टाः क्षत्रियाश्च वनमार्गज्ञा भूयोभूयोऽविदितगमनागमना निशि वा दिवा वाऽऽक्रमणैरुद्वेजयामासुः. तेऽपि यवना अपगतविजयमदाः कथंकथमपि प्रवसन्तो महता कष्टेन स्वावासमागच्छन्. यथा हि हळदीघाटयुद्धे बहवः क्षत्रियाः स्वर्गमगच्छंस्तथैव यवना अपि. प्रत्यावर्त्य दिल्लीगमने तु आधिक्येन. तत एव यवना विजयशालिनोऽपि पराजितकल्पा एवाभवन्.

इत्थं लब्धविजयो राजा मानसिंहः समं युवराजेन दिल्लीपतिं सर्वं युद्धवृत्तं कथयामास. सोऽपि स्वसेनाक्षयखिन्नोऽपि बहिस्तथाऽदर्शयन्महान्तमुत्सवमकरोत्.

एवं पराजित्य महाराजमेवाडाधिपतिं प्रतापसिंहं दिल्लीपतिरात्मानं धन्यममन्यमानः पुनरपि चिन्तयामास. यद्यपि मम से-

नापतिना महाराजः प्रतापसिंहः पराजितस्तथापि अद्यापि स स्वतंत्रएव. स च पुनरपि स्वातंत्र्यप्रियाणां राजस्थानजनानां साहाय्यं लब्ध्वा पुनरपि जितं भूविभागं स्वायत्तीकरिष्यति. अहं च न राजस्थानलाभोत्सुकः किंतु प्रतापसिंहस्वातंत्र्याभिमानहरणेच्छुः. किं बहुना. यावत्प्रतापसिंहो मानसिंहादिराजस्थानराजवन्मदीयां राजसभां नालंकरिष्यति तावल्लब्धोऽपि जयो जयो न. तत्समागतायां शरदि पुनरपि तं प्रतापसिंहं बन्दीकर्तुं सेनापतीन्प्रेषयिष्यामि इति.

अचिरादेव निर्मलाकाशमनोहरा, निर्गलितमेघपटलप्रकाशिसूर्यकिरणभासुरजगतीतला, निर्निद्रकमलततिसुन्दरतडागभासुरा, अतिविरलप्रजाविवातोन्नुन्नधवलमेघपटलांकिता, आश्यानकर्दममृदुलवनमार्गरुचिरा, निर्मलप्रवाहमण्डितपुलिनक्रीडद्धंसगणसरित्तटा, शाद्वलहरितसकलभूतलरमणीया, निर्भिन्नकाशगुच्छानुकृतवृद्धनारी, सुसंस्कृतक्षेत्रविराजमानबीजांकुरनयनाल्हादकरी, विषमतटजलपतनाकृष्टतीरवृक्षा, सकललोकप्रीतिपात्रं शरत् देवांगनेव भूतले प्रादुर्बभूव.

तां च समीक्ष्य समागतां सानन्दो दिल्लीपतिः पुनरपि प्रतापसिंहं विजेतुं सेनां समनह्यत्.

प्रतापसिंहोऽपि शक्तिसिंहसहायः समाप्त एव वर्षासमये पुनरपि राजस्थानाक्रमणाय प्रयतमानं तं दिल्लीपतिं निशम्य स्वयमपि स्वातंत्र्यरक्षणार्थमचेष्टत.

शीघ्रमेव प्रत्यक्षीकृतहळदीघाटयुद्धैः स्वप्रतिभाविरचितगीतैर्वीररसवर्धकैर्गाथकैर्बन्दिभिर्गीतानि महाराजप्रतापसिंहस्य पराक्रममयानि, झालारावस्य स्वामिभक्तिमयानि, शक्तिसिंहस्य बन्धुप्री-

तिमयानि, चेतकस्याद्भुतकर्ममयानि गीतानि निशम्य सर्वेऽपि राजस्थानवासिनः क्षत्रियास्तस्य साहाय्यविधानेनात्मानं धन्यं-मन्यमानाः सहसा शस्त्राणि गृहीत्वा तत् कुमळनेरदुर्गमाजग्मुः. महाराजः प्रतापसिंहश्च तान्सर्वानपि सत्कृत्य तेभ्यो भिन्नानि भिन्नानि कर्माण्यकथयत्.

स्वयं च त्यक्तालसो वर्षाजलपतितं दुर्गविभागं पुनरपि दृढं कुर्वंस्तत्र तत्र गत्वा सर्वं व्यवस्थाप्य दुर्गे सर्वामन्नसामग्रीं परिपूर्णां चक्रे.

एवमन्येष्वपि दुर्गेषु सर्वं व्यवस्थाप्य शत्रोरागमनं प्रतिपालयंस्तस्थौ.

दिल्लीपतिश्च स्वसेनां प्रतापसिंहस्याक्रमणार्थं प्राहिणोत्. पूर्ववत्सर्वां सामग्रीं तथा युवराजं मानसिंहं तथाऽन्यांश्चागणितान्वीरान्प्रेषयामास.

महाराजः प्रतापसिंहः स्वसेनापतिं शक्तिसिंहं विधाय वर्षातिरेकविषममार्गेषु निभृतमाक्रमणायारवलीशैलोपत्यकायां प्रेषयामास. स्वयं च कुमळनेरदुर्गे स्थित्वा राज्यव्यवस्थामपश्यत्.

---

## ( ३ )

सा च यवनसेना क्रमेण दिल्लीनगरान्निर्गता राजस्थानं प्राविशत्. तत्र च जलदसमयेन विवर्धितकंटकलताक्रान्तैर्विषमैर्मार्गैर्गच्छन्ती महान्ति दुःखान्यन्वभूत्. शक्तिसिंहोऽपि यवनसेनामर्मस्थानानि जानन् समये समये शूरैः क्षत्रियसैनिकैः समं शत्रुसेनामाचक्राम. प्रैषयच्चासंख्यान् यवनसैनिकान्यमालयं. युवराजश्च

शक्तिसिंहस्याक्रमणैस्तथा गिरिमार्गगमनदुःखैरुद्विग्नो मानसिंहेन समं संमन्त्र्य प्रतापसिंहनिवासदुर्गमभिलक्ष्य प्रचचाल.

आजगाम च कतिपयदिवसै रात्रिंदिवं प्रवसन् अगणितवनमार्गगमनदुःखः, शक्तिसिंहक्षापितबहुसैनिकः, वनवातज्वरितसैनिकः, पंकिलगिरिणदीजलपानातिसारव्याकुलपदातिः, पंकनिमग्नशतघ्नीसमाकर्षणव्याकुलाश्वकुलः, विपुलक्रूरवृककुलनिहन्यमानाश्वः, कथं कथमपि कुमळनेरदुर्गस्योपत्यकां. तत्र च कृत्स्नामपि सेनां निवेशयित्वा प्राकारविदारकाणां शतघ्नीनां स्थापनार्थं योग्यं स्थलमन्वेषयतिस्म.

प्रतापसिंहश्च तां यवनसेनां समीपमागतामवलोक्य सन्तुष्टः शक्तिसिंहं निभृतमाक्रमणार्थमादिश्य तस्या अन्नसामग्रीमपजहार. एवं महति क्लेशसमूहे निपतितोऽपि स मानसिंहोऽच्युतधैर्यो योग्यानि स्थलान्यन्विष्य तत्र शतघ्नीरस्थापयत्.

अथ प्रवृत्ते शतघ्नीनां लोहगोलकप्रहारे, अतितीक्ष्णबाणक्षेपैर्निहन्यमानेषु वीरेषु, कथं कथमप्यत्युन्नतशिखरवर्तिदुर्गाक्रमणार्थं प्रयतमानेषु यवनसैनिकेषु, तां यवनसेनां कुमळनेरदुर्गस्योपत्यकायां स्थितां सर्वतःप्रचारैः क्षत्रियश्रेष्ठैरनियतवेलमाक्रम्याक्षिणोत् महाराजः. ततश्च प्रतिदिनं क्षीयमाणान् सैनिकानगणयित्वा दुर्गाक्रमणार्थमादिशतः सेनापतेर्मानसिंहस्याज्ञामंगीकृत्य तरूणामाश्रयेण शिलानां संश्रयेण वा महता कष्टेन तस्य पर्वतस्य शिखरमारोढुं यवनाः प्रायतन्त. यदा च यवनास्त्वेषेणायुध्यन्त तदा दुर्गस्थाः क्षत्रिया उपरि स्थिताः पाषाणक्षेपैः, तप्ततैलपरिपूर्णकटाहनिक्षेपैः, तीराणां विक्षेपैः, खड्गाघातैश्च तान् यमालयं प्रेषयन्.

तदानीमेव दिल्लीनगरतः समागच्छन्तीं युद्धसामग्रीं भोजनसामग्रीं

च शक्तिसिंहः शूरैः सैनिकैः समं निबिडान्धकाराच्छन्ने, क्रूर-व्याघ्रघोरारावभयंकरेऽरवलीदरीप्रदेशे आक्रम्यालुण्ठत्. तेन दुर्लभान्ना नानाविधशैलवातसंपन्नज्वराक्रान्ताः, वन्यफलभक्षणविसूचिकाजर्जरिताः सर्वे यवनसैनिका दुःखसागरे न्यमज्जन्.

मानसिंहः समं युवराजेन पर्यटन् स्वसैनिकस्थितिमवलोक्य खिन्नः किंकर्तव्यतामूढो विचारमग्नोऽभवत्. अचिन्तयच्च—मया खलु स्वापमानदुःखपरिमार्जनार्थमेतद्युद्धं प्रारब्धं. यद्यपि हळदीघाटयुद्धे पराजितो महाराजः प्रतापसिंहस्तथापि तत्रास्माकं सैनिकक्षयोऽपि महानभवत्. पुनरप्यत्रागतोऽहं पूर्ववदेवानेकक्षत्रियसामन्तैः परिवेष्टितं सधैर्यं युध्यमानं मेवाडाधिपतिं पश्यामि. राजस्थानवासिनश्च सर्व एव क्षत्रियास्तं देवं मन्यमानाः सर्वथा साहाय्ययन्ति. किंबहुना—दिल्लीपतिसेवापरा अपि बहवः क्षत्रिया महाराजमनुकम्पन्ते साहाय्ययन्ति च. तदधुना युद्धेनालं. राजनीतिचतुराश्च चतुर उपायानाहुः. तत्रान्यतरस्यासंभवेऽन्यतरस्योपयोगः करणीय इति नियमः. अहं तं प्रतापसिंहं जेतुकामः कथं साम कुर्याम्. निस्पृहे स्वातंत्र्यप्रिये तस्मिन्दानस्यापि नोपयोगः. युद्धस्याप्यत्र न गतिरिति प्रत्यक्षं. तत्सम्प्रति उपजाप एव श्रेयस्करः. अस्मिन् राजस्थाने यथा प्रकृत्यैव शूरा जना जायन्ते तथैव परस्परद्वेषपरा अपि. ते च स्वद्वेषं येन केनाऽपि प्रकारेण शमयितुमिच्छन्ति प्रयतन्ते च. तच्छीघ्रमेव कश्चन दुर्गस्थो भेदनीय इति. अन्वेषयतिस्म तादृशं कुलांगारं देहद्रोहिणं. अलभत च शीघ्रमेव तादृशं महापातकिनं. अयं च महापातकी राजद्रोही अबूनरपतिर्देवराख्य आसीत्. स च प्रथमत एव लौकिकैश्चर्येच्छुरकबरपक्षपाती तस्य कृपासंपादनाय समयं

प्रत्यपालयत्. तं तथाविधं प्रत्यभिज्ञाय राजा मानसिंहः सन्तुष्ट आमिषेण श्वानमिव दिल्लीपतिकृपालाभदर्शनेन तं मातृभूमिद्रोहिणं राजद्रोहिणं न्यतानीत्.

एकदा गाढान्धतमसच्छन्ने भूविभागे, निरीक्षकाधिष्ठिते स्वस्वस्थानजाते व्याघ्रादिसंचारसाबाधे वनसंचारे, प्रदीपिकाविचित्रे स्कन्धावारे, स दुरात्मा गुप्तमार्गेण यवनसेनानिवेशमागत्य मानसिंहेन सममर्मीलत् सोऽपि युवराजसहितस्तं नितान्तमादृत्य दुर्गस्थवापीजलं दूषयितुमब्रवीत्. स तु महापापस्तदंगीकृत्य ततो विषं जग्राह.

वाचकाः! अस्मिन् जगतीतले प्रायो विद्वांसो जना एवं मन्यन्ते यद्विवाहादिभिर्लौकिकैः संबंधैरनुबद्धा जनाः परस्परं न द्विषन्ति किंतु यथाशक्त्युपकुर्वन्ति. एतदर्थमेव राजप्रजासंबंधमपि कल्पयन्ति. परन्तु न ते जानन्ति यदिमे संबंधा लोभोपहता अकिंचित्करा भवन्ति इति. सर्वस्य जगत इतिहासे बहवो दृष्टान्ता ईदृशा येषु च लोभेन पित्रा पुत्रस्य पुत्रेण पितुर्घातः कृतः. स्त्रीभिः स्वपतीनां नाशो विहितः. प्रजाभिश्च राजानो निहताः इति. तस्मादहं मन्ये कामक्रोधादीनां जयाभाव इमे संबंधाः किमपि नोपकुर्वन्ति. नैतावदेव, किंतु समये तेऽपकुर्वन्ति. स्वस्यराज्ञः प्राणरक्षणार्थं स्वप्राणान्विसृजतो झालारावस्य तथा दिल्लीश्वरकृपालोभाकुलस्यास्याबूराजस्य मध्ये कियदन्तरं किं मूलकमिति सूक्ष्मया दिशाऽवधारणीयं. अवधृते च मदुक्तं सत्यं नवेति स्वयमेव स्पष्टीभविष्यति. अस्तु. प्रकृतमनुसरामः.

सचाबूराजो निभृतं तद्विषमादाय तेनैव मार्गेण दुर्गमागतस्तस्यां वाप्यां तद्गरलं निक्षिप्य सर्वं जलमदूषयत्. सज्जनाः!

निसर्गप्राप्तस्वातंत्र्यरक्षणार्थं प्रयतमानस्य महाराजप्रतापसिंहस्य मार्गे विघ्नानुत्पादयन्तोऽबूराजप्रभृतयो मानवाधमा न केवलं मानवा: किंतु राक्षसेभ्योऽपि हीना:. कुटिलमतय: परोत्कर्षासहिष्णवो नराधमा ईदृशानि कुकर्माणि कुर्वन्ति. ईदृशपापाचरणान्न तेऽभीष्टं प्राप्नुवन्ति प्रत्युत सकलजनतिरस्कारास्पदतां तथा यावच्चन्द्रदिवाकरस्थायि अयशश्च.

अथोदयाचलमारूढे सकलकर्मफलानां दातरि प्रकाशतिरस्कृततम:पटले तं पापं जलदूषकं प्रदर्शयितुमिव भगवति सवितरि सर्वे दुर्गवासिनस्तदेकालंबना जलानयनायागच्छन्. केचिच्च गण्डूषविधानार्थं गृहीतजलास्तत्रैव मूर्च्छिता न्यपतन्. तांश्च मृतानवलोक्याऽन्येऽपि जना: संदिग्धास्तज्जलं परीक्षितुं राजवैद्यमाव्हयन्. सोऽपि समागत: सम्यक् परीक्ष्य तज्जलं गरलदूषितमकथयत्. तामिमां वार्तां सेवकमुखान्निशम्य विस्मितो महाराजो दु:खाकुलस्तत्रागत्य सर्वमपश्यत्. अशोचच्च मनसि—मातर्मेवाडमेदिनि ? यदि त्वदीयान्येवापत्यानि तव स्वातंत्र्यालंकारापहरणार्थं शत्रुं साहाय्ययन्ति तदा मादृशो जन्तु: किं कुर्यात्. अहं तु यावज्जीवं त्वदीयस्वातंत्र्यरक्षणार्थं बद्धकक्ष: सफलीकरिष्यामि त्वद्धत्तमिदं शरीरमिति.

महाराज: प्रतापसिंहश्च जलं विना तस्मिन्दुर्गे स्थातुमशक्नुवान: कृत्स्नमपि मंत्रिमंडलमाहूय कर्तव्यं विचारयामास. तेषां संमत्या स्वयं दुर्गान्निर्गत्य ससैन्यमन्यत्र गन्तुमियेष.

महाराज: प्रतापसिंहस्तस्यामेव रात्रौ पुनरपि सर्वान्स्वसहायानाहूय विचार्य च दुर्गाधिपत्ये सोनीगडमुख्यमभिषिच्य तदनुमत्या वर्तनाय सर्वानप्यादिश्य तं भाणनामानं दुर्गाधिपमवोचत्.

सामन्तश्रेष्ठ? यथाशक्ति युध्वैवैतद्दुर्गं शत्रुसात्करणीयं. येन मानसिंहोऽपि कूटाचरणं निष्फलं मन्येत. पश्चात्त्वमपि मदन्तिकमागमिष्यसीति. सोऽपि स्वामिभक्तः सर्वं तथेति प्रतिजज्ञे. महाराजः प्रतापसिंहोऽपि कतिपयसेवकपरिवृतस्तूष्णीमेव कुमळनेरदुर्गान्निर्गतश्चोंडनाम्नि प्रदेशेऽवसत्.

मानसिंहप्रभृतयः सर्वे यवनसामन्ताः प्रभाते समुत्थाय पश्यन्तः पूर्ववदेव युध्यमानवीरलोकं तद्दुर्गमवलोक्य विस्मिताः किमपि नाजानन्. ततश्च क्रमेण तद्दुर्गं निरुध्य तूष्णीं यवना अतिष्ठन्. अन्तस्था जनाअपि कथंचित्कालं यापयन्तः कानिचिद्दिनानि तत्रावसन्. अथ समाप्ते धान्यसंग्रहे नष्टेषु गुप्तेषु जलनिर्झरेषु ते सर्वेऽपि क्षत्रिया दुर्गद्वाराण्युद्घाट्य बहिःस्थितं शत्रुसैन्यमाक्राम्यन्. अगमंश्च वीरोचितॉंल्लोकान्. यवनाश्च तस्मिन् दुर्गे कृतप्रवेशाः सर्वमप्यमन्यायत्तमद्राक्षुः.

---

## ( ४ )

ततश्च यवना महाराजप्रतापसिंहस्य निवासमनुपलभ्य चिन्तातुरा कर्तव्यमूढा एवाजायन्त. मानसिंहश्च राजस्थानस्थानि सर्वाणि स्थानानि जानन्नगणितान्कुशाग्रबुद्धींश्चारान्सर्वतः प्रेषयित्वाऽचिरादेव तन्निवासस्थानमाजानातिस्म. चोंडासंस्थानाधिपः स्वामिभक्तः स्वामिनं स्वगृहागतमवेक्ष्य प्रमोदमग्नः प्रतापसिंहमत्यादरेणासेवत. सोऽपि च परमानन्देन तत्सेवामंगीकृत्यागमिष्यतो यवनसैन्यस्य प्रतिकाराय प्रायतत. ये खलु तस्मिन् प्रदेशे शैला आसंस्तेषां शृंगेषु तथा दुर्गेषु शूराणां योद्धृणां संघानस्थापयत्.

एवं सन्नाहे प्रारब्धे राजा मानसिंहः कुमळनेरदुर्गं स्वायत्ती-

कृत्य तेनैव मार्गेणाग्रे समागच्छत्. मार्गे च शूरैः क्षत्रियैः कृत-प्रतिबन्धोऽपि नैव स्वप्रयत्नं शिथिलीचकार. स च मार्गस्थे एव ' धरमेती, गोगुंडा ' नामके दुर्गमे दुर्गे आक्रम्य स्वायत्तीचक्रे.

इतश्च राजा मानसिंहो दुर्गमकुमळनेरप्रभृतिदुर्गविजयेन वर्धितोत्साहः फरीदखाननामानमन्यं दिल्लीपतिसामन्तं चोंडासंस्थानाक्रमणाय प्रैषयत्. सोऽपि सत्वरं गत्वा च्छपन्ननामानं जनपदमाक्रम्य घोरं युद्धं व्यतानीत्.

अचिरादेव अमीरशहानामकेन यवनसेनाधिपतिना चोंडास्थानं निरुध्य तस्यान्यदेशेन सह संबंधःच्छिन्नः. तेन तत्र दुर्लभान्नजले स्थातुमसमर्थो महाराजः प्रतापसिंहो हीनबलः कतिपयैः स्वसहायैः सममरवलीशैलमाश्रयत्.

---

## ( ५ )

तदानीं तु महाराजः प्रतापसिंहः केवलमेकाकी सहायहीन इतरजनवद्रात्रिंदिवं बभ्राम. कदाचिन्निबिडवृक्षावलीसमाच्छादितेऽत्युन्नते शिखरे सूर्यप्रतिमाशालि, नवशशांकइव राजस्थानवासिजननयनाल्हादकरं, स्वातंत्र्यमिव मूर्तं, मेवाडभूमेः सौभाग्यतिलकमिव ध्वजमुन्नमय्य स्वास्तित्वं प्राकाशयत्. यवनसेना च तत्र गत्वा यावत्तमाक्रन्तुमारभते तावदेव विद्युद्विलासवत्क्षणादनेकान्यवनान्यमालयातिथीन्विधायापरस्मिन्पर्वतशिखरे स्वध्वजमुन्नमयत्. कदाचिन्निबिडान्धकारायां निर्झरजलमनोहरायामतिविरलकोमलसूर्यकिरणध्वस्ततिमिरायां, शैवालमृदुलशय्यासनाथायां, अतिस्वादुकन्दाढ्यायां गुहायां वसन् स्वसहायैर्वनचरैरितस्ततो भ्रमतो यवनसैनिकाननाशयत्.

एवं सदा प्रयतमानोऽपि यदा यवनसेनापतयः प्रतिदिनं तदन्वेषणार्थमधिकं प्रायतन्त तदाऽरवलिपर्वतोपत्यकायां वासमश्रेयस्करं मत्वा निःसहायः क्षीणबलः कतिपयैर्द्वितीयैर्हृदयैरिव प्रतिबिम्बैरिव सामन्तैः समं वनेचरैः सहातिसुन्दरमरवलिशैलराजस्य मूर्धानमध्यवसत्.

सोऽपि पर्वतराजः स्वस्वामिनं दुर्दैवपीडितं क्षीणबलं द्रव्यकोशविरहितं सुहृदयगणत्यक्तं, मातृभूमिस्वातंत्र्यरक्षणार्थं प्रयतमानं मृत्युलोकगतं पाकशासनमिव सत्यव्रतं प्रतिज्ञापालनतत्परं धर्मराजमिव, बलाढ्यं भीममिव, अद्वितीयधनुर्धरमर्जुनमिव, पवित्रवंशसंभवं पुण्यश्लोकं मेवाडाधिपतिं प्रतापसिंहं स्वावासमागतमवलोक्य सन्तुष्टः कुसुमितलतासंगमधुरेण प्रफुल्लकमलिनीसुन्दरतडागतरंगसंगिना मन्दमन्दवाहिना मरुता प्रथमतः श्रान्तस्य तस्य परिश्रमं दूरीचक्रे. ततश्च प्रफुल्लबकुलवीथिकाकन्यकाभिः सुरभिकुसुमास्तरणानि विधाय तेषु तं महाराजं समुपवेशयत्. क्षुधातुरस्य तस्य कृते नूतनानि आम्रफलानि वा कदलीफलानि वा जम्बूफलानि वा समं कदुष्णेन गोदुग्धेन समानयत्. मध्यान्हे च पाटलीपुष्पसुगंधिषु तडागजलेषु कारितविहारं सूर्यतापपरिहाराय विकचप्रसूनमण्डितेषु लतानिकुंजेषु अशाययत्. सायं च मृगमांसानि भोजयित्वा परितो वृक्षराजिबद्धकोटरनिवासिभिः पक्षिगणैस्तदीयास्तुतीर्गापयन्नत्यादरेण तमसेवत.

महाराजो मेवाडाधिपतिस्तस्य सेवया संतुष्टोऽपि मेवाडमेदिन्याः स्वातंत्र्यविधानेऽनलस एवाऽभवत्.





# १२ तत्राद्वादशवर्षमहाकष्टसहनम्.

१ अरण्यवासः.
२ वनेचरवृत्तिः.
३ प्रतापसिंहस्यधैर्यच्युतिः.
४ पृथ्वीराजलेखः.
५ पुनरपिसोत्साहंप्रवृत्तिः.

( १ )



एवं शैलराजस्यारवलिपर्वतस्याधित्यकायां वसानं महाराजं मेवाडलक्ष्मीपतिं चारमुखान्निशम्य द्वेषपरो मानसिंहः स्वसेनामुपत्यकायां स्थापयित्वा कांश्चित्सामन्तान् पर्वतयुद्धकुशलैः सैनिकैः समं तस्य प्रतापसिंहस्य बन्दीकरणाय प्रैषयत्. ते च पर्वतमार्गानजानन्तः सत्पक्षपातिभिरिव पर्वतराजप्रेरितैरिव व्याघ्रैर्वा वृकैर्वाऽहन्यन्त. तथापि स मानसिंहस्तथा दिल्लीपतिरकबरो भूयोभूयो वृथा सैनिकान् प्रैषयताम्.

तेऽपि च पारितोषिकलोभाकुलाः संघीभूय संचरन्तोऽधित्यकायामपि सुलभानि वनान्याक्राम्यन्. महाराजः प्रतापसिंहस्तु तत्रैव निवसंस्तांल्लीलयैव पराजिग्ये.

एकदा च फरीदखाननामा यवनसेनापतिः प्रतापसिंहं बन्दीकर्तुं प्रयतमानः सावधानतया तत्र तत्र प्रतापसिंहनिवासस्थानेषु प्रचचार. महाराजोऽपि विज्ञाततदागमनस्तत्रैव वनेचरदर्शितगुप्तमार्गो लीलयैव शृंगाच्छृंगान्तरं गच्छन्नतिक्लेशयित्वाऽगणितान्यवनसैनिकान्नाशयामास. सोऽपि यवनसेनापतिरगणितान् क्लेशान् सहमानो रात्रिंदिवं प्रायतत.

एकस्मिन् दिने स यवनसेनापतिः कुतोऽपि सर्वत्र संचारिणो वनेचरात् ज्ञात्वा महाराजप्रतापसिंहस्य समीपं निवासमत्युत्सुकः कतिपयैः सैनिकैः समं प्रचचाल. प्राप चाचिरादेवोग्रं वृक्षावलीसंकीर्णं पर्वतशिखरं. अपश्यच्च—महति शिलाखंडे निषण्णं, अतिमधुरदर्शनं, लोहमयशिरस्त्राणरक्षितशिरस्कं, विशालभालपट्टं, विकचनीलसरोरुहनयनं, अतिपीनमांसलगंडमंडितमुखं, आजानुबाहुं, खड्गलतासेवितं, इपुधियुगलमांसलितस्कन्धं, विशालचापांकितहस्तं, आयसकवचसुरक्षितसकलदेहं, अतिपीवराभ्यां सक्थिभ्यां बलाढ्यं मृगराजमिव साटोपं स्थितं तं मेवाडसूर्यं. अवलोक्य च राहुरिव तद्ग्रासाय स यवनसेनापतिरधावत. महाराजः प्रतापसिंहस्तं समागच्छन्तमवलोक्य तूष्णीं तस्थौ. ततः समीपमागतं तं समीक्ष्य तदनुयायिनां प्रतिबन्धार्थं स्वसहायानसूचयत्. ते च क्षत्रियाः स्वामिनियोगमनुसृत्य सहसा संकुचिते दरीमुखे तान् यवनसेनापतिसहायानरुन्धन्. तेऽपि अकस्मात् समागतैः क्षत्रियवीरैर्निरुद्धा अज्ञातप्रदेशाः किमपि कर्तुं न प्राभवन्. तांश्च क्षत्रियसैनिकैर्निरुद्धानविज्ञाय सजवमग्रे गच्छन्तं तं यवनसेनापतिं वीक्ष्य महाराजः स्वमुखं निवर्त्यासिलतामण्डितकरस्तस्थौ.

तं महाराजं प्रतापसिंहं नग्नामसिलतां गृहीत्वा पुरतो वर्ते-

मानं यवनान्तकमिव समुपस्थितमवलोक्य भीतः स फरीदखानो नाम यवनसेनापतिः पश्चात्कानिचित् पदानि गत्वा स्वसहायानशोधयत्. तं च सहायशोधननिरतं भयविव्हलं कम्पमानगात्रं यवनसेनापतिं वीक्ष्य सहासमब्रवीत्—रे यवन? किंकर? मा बिभीहि. तव सहायाश्च पुरैव मम सहायैर्बन्दीकृताः. त्वमपि मदीयाज्ञयैव मुक्तः. त्वं चेतोगतः स्वस्वामिनं महामानिनं दिल्लीपतिमकबरं ब्रूहि. प्रतापसिंहो वदति ‘ नाहं मानसिंहो येन स्वभगिनीं कन्यां वोपहारीकृत्य त्वदीयां कृपां प्रार्थयेयम्. अहं च पवित्रसिसोदियाकुलसंभवो मेवाडमेदिनीपतिरस्मि. त्वं च सेनाबलाढ्योऽपारकोशसमन्वितः स्या नाम तथापि परमेश्वरसाहाय्यात्तत्सर्वमप्यत्यल्पमेव. मम हि सत्यपक्षपातित्वेनेश्वरः सहाय एव. तद्यद्यप्यधुना त्वया बलोन्मत्तेन मदीया प्राणप्रिया मेवाडमेदिनी समाक्रान्ता तथापि अहमचिरादेव तां पुनरपि स्वायत्तां करिष्यामि. हे अकबर? हळदीघाटविजयेन वा मेवाडमेदिनीसमाक्रमणेन वाऽऽत्मानं धन्यं मा मन्यस्व. इमे च जयपराजयाः समुद्रतरंगवद्दैवाधीना एव. त्वदीयः पिता चक्रवर्तिनस्त्वत्पितामहस्य बाबरस्य पुत्रः कथं वन एव त्वामलभत. तत्त्वमपि सर्वमेतन्मनसि कृत्वा न्याय्येन मार्गेण वर्तस्वेति’ इति. स तु दीनः सेनापतिर्मेघनिनादगंभीरेण ध्वनिनैवमुक्तः किमपि नाब्रवीत्. उत न तं स्वमुखमुन्नमय्यापश्यत्. केवलं तदीयं सर्वं भाषणं निशम्य तेन गमनायानुमितः प्रत्याजगाम. सत्वरमेव ‘दिल्लीनगरं गत्वा स्वाधिपाय सर्वं वृत्तं न्यवेदयत्.

दिल्लीश्वरोऽकबरः सर्वं प्रतापसिंहभाषणं तत्कथितं निशम्यातिचुक्रोध. अचिन्तयच्च मनसि. अहं तावत् समग्रभारतवर्षा-

धिपः केवलमेकाकिनमसहायं प्रतापसिंहं बन्दीकर्तुं न प्रभवामि. रणधुरंधरेषु मान्येषु मानसिंहप्रभृतिषु मदीयसेनापतिषु प्रयतमानेष्वपि कतिपयसहायः प्रतापसिंहोऽरवलिपर्वते यथेच्छं संचरति. तदेतन्न समीचीनं. अद्यैव सभामाहूय सर्वे नवीनाः सेनापतयोऽस्मिन् कर्मणि नियोज्या इति. अचिरादेव सभां विधाय नूतनान् सेनापतीन् प्रतापसिंहबन्दीकरणाय नियोजयामास.

तेऽपि स्वामिकृपायास्तथा धनस्य संमानस्य लोभेन व्याकुला रात्रिंदिवमसंख्ययवनसैनिकव्ययमगणयन्तः प्रयतमाना महाराजं प्रतापसिंहं शैलराजारवलिपर्वताधित्यकायामपि अत्यन्तमत्रासयन्.

अथ महाराजो यवनबाहुल्यतया तत्रापि वासमसमीचीनं मन्यमानः स्थानान्तरं जिगमिषुस्तादृशं स्थलमन्वेषयतिस्म. तं च मेवाडाधिपतिं स्थलान्तरे गन्तुकामं निशम्य सर्वेऽपि वनेचरास्तत्रागत्य स्वनिवासागमनाय विज्ञापयामासुः. महाराजोऽपि तानकारणसुहृदो निसर्गप्रीतिमयानतिबलाढ्यान् स्वातंत्र्यप्रियाँल्लौकिकविलासानभिज्ञानरण्यवासिनो वीक्ष्य सन्तुष्टस्तैः समं परमविशालस्यारवलिशैलस्यागाधं सततनिपतत्पर्जन्यधाराक्लिन्नभूतलं, गाढमिहिकाच्छादितवृक्षगुहोच्चशिलाजातसमानं, अविज्ञातसूर्योदयं, इतस्ततो धावमानमेघमण्डलसंपर्कजलाविलनिवासगृहं, असंख्यमुक्ताजालतुषारकणालंकृतनिर्झरगणमण्डितं, परमविशालांधतमसच्छन्नगुहासहस्रभूषितं, अतिसंकीर्णवृक्षावलीग्रथितलतानिकरादृष्टविशेषं, निर्भयसंचरद्वनशार्दूलघोराराव भयंकरं, वनेचरबालकसंचरणरमणीयं, कूजन्नानाविधपक्षिगणनिबद्धकोटरसुन्दरं, स्थाने स्थाने निवसतां वनेचराणां निरीक्षणतः शत्रुचारैर्दुष्प्रवेशं, विकरालजिव्हाभयंकरदर्शनैः रोममयशरीरैरतिकृशैः सारमेयैः कृतरक्षं, अति-

विरलधान्यांकुरमण्डितक्षेत्रं, फलभारावनम्रासंख्यवृक्षगणयथेच्छसंचारिकपिकुलं, अतिवेगप्रवहद्भिरिनदीविषमितभूविभागं, यथेच्छसंचारपरिपुष्टगोमहिष्यादिपशुगणं, उच्चशिलाखण्डनिषण्णगोपालबालकवाद्यमानमुरलीमनोहरध्वनिमधुरं, मल्लयुद्धार्थे निर्मितशालाकं, स्वातंत्र्यनिवासमिवानाचारास्पृष्टं तद्वनेचराध्युषितं मध्यमाजगाम.

---

## ( २ )

तेऽपि च सर्वे वनेचराः स्वनिवासमागतं मेवाडाधिपतिं तथा तत्परिवारं महता प्रेम्णा संतोषयामासुः. केचन वनफलपुष्पमण्डितहस्तास्तं नमस्कृत्य फलानि पुष्पाणि तस्मै समर्पयामासुः. अन्ये च व्याघ्रचर्मणा, गोदुग्धभाण्डेन वा गुंजामालाभिर्वा हरिणबालकयुगलेन वा महता सारमेयेन वा, शशकेन वा समागताः स्वस्वोपहारं तस्मा उपायनीचक्रुः.

महाराजः प्रतापसिंहोऽपि अकृत्रिमप्रेम्णा समानीतं, विपत्तिसाहाय्यकारिणां प्रकृतिसरलानां स्वामिभक्तानां पापाचारानभिज्ञानां तेषां वनेचराणां तदुपायनजातं सानन्दं स्वीकृत्य मधुरेण संलापेन समतोषयत्. ते वनेचराअपि अतिनिर्मलहृदयाः श्रीमता मेवाडाधिपतिना समं संलापादात्मानमतिधन्यममन्यन्त. तस्य करकमलस्पर्शेनाऽपि आत्मानं पूतं. यथाहि वनेचरा महाराजमसेवन्त तथैव वनेचरांगना अपि महाभाग्यां राज्ञीं तथा तदीयान् पुत्रानपि सिषिवुः. महाभाग्या मूर्तिमती मेवाडलक्ष्मीरिव स्वतंत्रतेव राज्ञी ताः समागता वनेचरभार्या बहु मन्यते स्म.

महाराजश्च तत्र निवसन्विश्वासपात्रैर्वनेचरैः सममरण्यानीं

पर्यटन् यवनानां वृत्तं तेभ्य एवांगीकृतचारकृत्येभ्यो विजानन् महता प्रमोदेन कालं यापयन्नागणयद्राजप्रासादनिवाससुखं.

दिल्लीपतिश्च फरीदखाननामकसेनापतेर्मुखाज्ज्ञातप्रतापसिंहभाषणः कोपायमानः पुनरपि प्रतापसिंहाक्रमणे साभिनिवेशं प्रावर्ततेत्युक्तमेव. स च वनेचरैः सममरवलीपर्वतमध्यवासिनं तं निशम्य महतीं सेनां मोघां मन्यमानो गणशः सादिनां मण्डलानि तथा पदातीनां समूहान् प्रैषयत्. तदधिपांश्चारवलीपर्वतमार्गज्ञानेवाकरोत्. तेऽपि पारितोषिकलोभाकुला महता प्रयत्नेन प्रयतमाना रात्रिंदिवं सैनिकक्षयमगणयन्तः प्रतापसिंहाक्रमणाय सर्वमप्यरवलिशैलं पर्याटन्. तांश्च बाहुल्येन वंचयित्वा ते स्वामिभक्ता वनेचरा अन्यत्र नीत्वाऽघ्नन्. अन्यांश्च शरणागतान् शपथं ग्राहयित्वाऽमुंचन्. तथापि प्रयत्नेभ्योऽविरतान् समीपमागतान् यवनान्निशम्य प्रतापसिंहो महता वेगेन तेषु तेषु शिखरेषु संचरन् स्वीयं ध्वजमुन्नमय्य स्वस्थितिं निवेदयामास. तेऽपि च वराकास्तां पताकामवलोक्य तत्रागता महता कष्टेनानेकान् यवनसैनिकान् हत्वाऽन्यत्र गतं तमशृण्वन्. पुनरप्यन्यत्रोदितां तां वैजयन्तीं प्रेक्ष्य क्रोधान्धाः तत्रागच्छन्. एवं ततस्ततोऽपि.

प्रतापसिंहं शिखराच्छिखरान्तरं लीलया गच्छन्तं तमनुधावितुमक्षमा यवनसैनिका अत्यन्तमत्रस्यन्. वनेचराश्च स्वप्राणानपि तृणीकृत्य तं तथा तदीयं परिवारमरक्षन्. यदा च महाराजोऽधिकां यवनसेनामपश्यत्तदा ततो निर्जिगमिषुर्यवनानुधावनवैफल्यार्थं मार्गे प्रतिबन्धनार्थं तान् वनेचरानस्थापयत्. तेऽपि तदाज्ञां देवाज्ञामिव पालयन्तो महता शौर्येणताननुधावतो यवनान् प्रत्यबध्नन्. महाराजमन्यस्मिन् शिखरे समुन्नमितध्वजमवलोक्य

पर्वतदरीमार्गैर्निर्गत्य तत्समीपमाययुः. यवनाश्च तान् मार्गानजानन्तोऽनुधावितुं नाशकन्. समये समये तु अकस्माद् गतान् यवनान् पाषाणखण्डैर्घातयन्तो महाराजं पृष्टेन वहन्तोऽन्यत्रागच्छन्. महाराजः प्रतापसिंहोऽपि पर्वतारोहणक्लान्तं, दूरानुधावनश्रान्तं क्षुत्पिपासाव्याकुलं भोजनव्यग्रं तद्यवनसैन्यमकस्मादाक्रम्याक्षिणोत्.

अथ राजाऽकबरः प्रतापसिंहाक्रमणार्थं तत्परिवारं स्वहस्तगतं कर्तुं स्वसेनापतिमाज्ञापयामास. महाराजःप्रतापसिंहः स्वकुटुंबं वनेचरेषु निक्षिप्य निरातंकस्तत्र तत्र यवनसेनाभिः समं युयुधे. तेन च समं प्रायः शूरा धानुष्का वनेचरा अगच्छन्. एतत्सर्वं विज्ञाय ते यवनसेनाधिपतयः स्वजनसमूहं द्विधा कृत्वा महाराजेन सममेकं सैन्यं योधयन्तोऽपरं तत्कुटुंबं बन्दिकर्तुं प्रैषयन्. वनेचरा अपि ज्ञातयवनस्वभावास्तान् दूरादेव समागच्छतो ज्ञात्वा श्रीमहाराजप्रतापसिंहपरिवारमन्यत्रानयन्.

कदाचिदनुधावतस्तान् वृद्धा वनेचरास्तथैव तदंगना मिलिता यवनसैनिकान् पराजयन्त. कदाचित् संख्ययाऽधिकांस्तान् पराजेतुमक्षमास्ते वनेचरा राज्ञीं तथा बालकगणं कस्यांचिद्गुहायामस्थापयन्. साऽपि च सती माता सिसोदियावंशकीर्तिरिव संचारिणी मेवाडमेदिनीव त्रैलोक्यलक्ष्मीरिव विजयश्रीरिव प्रसन्नवदनाऽतिकठिनास्वपि विपत्सु चिन्ताविहीनहृदया सर्वदा परमेश्वरमेव स्वपालकं मन्वाना सुखेन ताभिर्वनेचरांगनाभिः समं तस्मिन्नरवलिपर्वते यवनसेनानुधाविता स्वचरणैः सकलानि स्थानानि पावयामास. कदाचित्सर्वतो यवनसैनिकपरिवेष्टिते पर्वतशृंगे धावितुमक्षमा सा राज्ञी तथा तदीयोऽपत्यगणो वनेचरैर्वृक्षेषु न्यधीयत.

कदाचिद्वृकव्याघ्रपरिव्याप्ते स्थाने निशातिवाहनार्थं महाराजः प्रतापसिंहः समं स्वकुटुंबेन वृक्षशाखास्ववसत्. सर्वतः शाखासु जागरूका धनुर्धारिणो वनेचरा अतिष्ठन्. कदाचिदशक्तांस्तान् सर्वानपि ते स्वामिभक्ता वनवासिनोऽतिदृढलतावलयैर्विरचितासु दोलासु स्थापयित्वाऽरक्षन्. महाराज्ञी तु ता सर्वा अपि विपदः सुखेन सेवमाना स्वपतिं स्वातंत्र्यरक्षणार्थं भूयोभूयः प्रोत्साहयामास. बालाश्च पुत्रा न किमपि जानन्तोऽपि धीराः सामोदमवसन्.

( ३ )

अथ महाराजः प्रतापसिंहो वनेचरसमवेषस्थितिः सर्वतो बभ्राम. तं त्यक्तराजविलासं विपद्यपि अत्यक्तसत्यव्रतं, प्रतिज्ञापालनतत्परं समवलोक्य ते सर्वेऽपि वनेचरास्तथाऽन्येऽपि राजस्थानवासिनः शूराः क्षत्रिया देवं मन्यमाना रात्रिंदिवं तद्रक्षणार्थं प्रायतन्त.

दिल्लीपतिरकबरस्तु स्वीयसेनायां प्रयतमानायामपि निःसहायमप्यलब्धं तं मेवाडाधिपतिमाकर्ण्य विस्मितः कंचनातिकुशाग्रमतिं दूतं ' कथं प्रतापसिंहो जीवति कथं च तदीयाः सहायास्तेन समं वर्तन्त ' इति ज्ञातुं तदन्तिके निभृतं प्रेषयामास. सोऽपि विपरिवर्तितवेषो निभृतमागत्य महाराजं प्रतापसिंहं तथा तदीयपरिवारं च निरीक्ष्य प्रत्यागतः सर्वमपि वृत्तं स्वामिनेऽश्रावयत्. तच्चेत्थम्.

स्वामिन्? श्रीमेवाडाधिपतिः क्षत्रियकुलमुकुटमणिर्महाराज

प्रतापसिंहः संप्रति शैलराजस्यारवलिपर्वतस्याधित्यकाया मध्यमधिवसति.

तत्र च तदीयानि प्रतिबिंबानीव सदैव तद्रक्षणे जागरूका वनेचराः संघशः पर्यटन्ति. यद्यपि हृतराज्यस्य निर्द्रव्यस्य महाराजस्य समीपे द्रव्यं नास्ति तथापि केवलं स्मितपूर्वकमाभाषणेनैव स्वजन्मनः साफल्यं मन्यमानास्ते वनेचरा निरतिशयं तं सेवन्ते. स्वामिन्? संप्रति महाराजो मेवाडाधिपतिरपरो वनेचर इव वेषेण तथापि तदीयं प्रसन्नं मुखमण्डलमेव राजतामावेदयति. त्वदीयसेनानुधावनाद्यद्यपि क्षणमात्रं स्वास्थ्यं नास्ति तथापि सती महाराज्ञी कदापि न खिद्यति. सा तु सीतेव रामचन्द्रं तं महाराजमतिप्रोत्साहयन्ती सर्वदैव स्वातंत्र्यपालनार्थमुत्तेजयति. स्वामिन्? यद्यपि तेभ्यो वनेचरेभ्यो लक्षसुवर्णमुद्रा दीयेरंस्तथापि ते तदपेक्षया वन्यान्नविरचितस्य महाराजेन स्वभोजनस्यांशं वितीर्णं बहु मन्यन्ते. किंबहुना—संप्रति ते वनेचरा निःस्पृहं स्वातंत्र्यप्रियं मेवाडनरपतिं परमेश्वरादप्यधिकं मन्यन्ते. तथैव तमुपासते—तद्रक्षणे प्रयतन्ते च. महाराजो मेवाडभूपतिरपि तादृशानकृत्रिमान् सुहृदो लब्ध्वा धन्यंमन्यः सुखेन जीवति. तेषामेव साहाय्येन स्वराज्यं त्वत्तो लब्धुं पुनरपि प्रयतते. स च निरतिशयधैर्यसागर इत्यत्र न संशयः. अत्रैकां कथां कथयामि.

यदाप्रभृति राजस्थानवासिभिर्नृपतिभिर्यवनसंबंधः कृतस्तदारभ्य महाराजो मेवाडाधिपतिर्दिल्लीवासिभिर्नागरिकैर्वा राजभिर्वा शरीरसंबन्धं तथाऽन्नव्यवहारं च निषिषेध. एतज्जानन्त्यपि बिकानेरनृपतिबन्धोः पृथ्वीराजस्य भगिनी श्रीप्रतापसिंहस्य ज्येष्ठपुत्रे बद्धप्रेमभावा स्वतातस्याज्ञया प्रतापसिंहस्य परिवारेऽवसत्.

तत्र च सर्वमपि सेवककृत्यमाचरन्ती सा स्वपत्युर्दर्शनेनैव कृतार्थमात्मानममन्यत. महाराजः प्रतापसिंहस्तु तस्या मनोरथं जानन्नपि स्वनियमं हातुं न प्राभवत्. साऽपि सत्यप्रतिज्ञं तं मेवाडाधिपतिं जानन्ती केवलं तत्सेवयाऽऽत्मनः साफल्यं मेने. एकदा महति प्रत्यूषे त्वदीयाः सैनिका अकस्मात् प्रतापसिंहनिवासमागत्य योद्धुमारभन्त. तदानीं च बहवो वनेचराः शरीरशुध्यादिकार्यार्थमन्यत्रागच्छन्. धैर्यखनिः प्रतापसिंहस्तान् स्वनिवासमागतानवलोक्य निष्कोषीकृतखड्गो धैर्येण प्रतिकारमारभत. तत्र तदानीं वसन्ती सा क्षत्रियकन्यकाऽवशिष्टान् वनेचरान् महाराजस्य परिवारमन्यत्र नेतुमाज्ञप्य स्वयं खड्गहस्ता महाराजं युद्धेऽसाहाय्ययत्. तदानीं च सा साक्षाज्जगदंबेव भासमानाऽगणितांस्तव सैनिकान् यमालयं प्रेषयामास. महाराजो मेवाडाधिपतिरपि तस्याः शौर्यं स्वामिनिष्ठां युद्धनैपुण्यं समवलोक्य नितान्तं विस्मितोऽभवत्.

अथ स्थलान्तरे नीतं महाराजकुटुंबमवलोक्य यवनसेनां च वर्धमानां मेवाडाधिपतिः शनैः शनैस्तया शस्त्राघातविकलसुकुमारदेहलतया राजकुमार्या सममन्यत्र ययौ. तत्र राज्ञी तां राजकुमारीं स्नुषेव परिचचार. मेवाडाधिपतिस्तु तां स्वकन्यामेव मेने. गाढप्रहारा सा क्रमेण क्षीयमाणा क्षणादिमं लोकं त्यक्ष्यन्ती शयनीये निपतिता निर्निमेषं समीपस्थस्य कृपामृदुलस्याश्रुमोचिनः प्रतापसिंहस्य मुखं नीलोत्पलसदृशाभ्यामक्षिभ्यामवलोकमाना श्वासकम्पमानोरस्काऽसीत्. तस्यां बद्धप्रेमभावः कुमारोऽपि भूमिनिहिताक्षः शनैः शनैरश्रूण्यमुंचत्. मेवाडाधिपश्च तस्या मनोरथं विज्ञाय सकरुणं जगाद—वत्से ? अहं जानामि तव मनोरथं. त्वा-

दृशकन्यायाः स्नुषात्वेन लाभे बहु संचितं सुकृतमपेक्ष्यं. त्वं हि न केवलं स्नुषा भवितुमर्हसि किंतु मम माताऽपि. तथापि बाले? त्वामहं स्वस्य स्नुषात्वेन व्यपदेष्टुं नालमस्मि. यतो तथासति मयैव कृता प्रतिज्ञा विहन्येत. मय्येव प्रतिज्ञाभंजके सति सिसोदियाकुलपावित्र्यं कं शरणीकरोतु. तस्माद्यद्यपि त्वमसि निष्कलंकचरित्रा तथापि दिल्लीनगरवासदोषदूषिताऽसि. कन्ये? तस्मादस्मिन् जन्मनि यद्यपि त्वां स्नुषां विधातुं नाहमलमस्मि तथापि परस्मिन् जन्मनि त्वदीयामाशां सफलयितुमहं परमात्मानं प्रार्थयामीति. उक्त्वा चेत्थं प्रभूतं जलं दीर्घाभ्यां नेत्राभ्यां विससर्ज. साऽपि कन्यका तावतैव धन्यंमन्या जडाभ्यां हस्तकमलाभ्यां तं मेवाडाधिपतिं नमस्कृत्य स्वप्रियकरं च स्मितेनापृच्छ्य संजातसंतोषा सानन्दं प्राणानत्यजत्. मेवाडाधिपश्च बहुलशोकमग्नोऽपि न स्वप्रतिज्ञामजहात्. इति.

दिल्लीपतिरकबरस्तथा तदीया अमात्याश्च तत्सर्वमपि वृत्तं निशम्य विस्मितास्तं मेवाडाधिपतिमस्तुवन्. प्रधानामात्यः खानखानननामा तु श्रीप्रतापसिंहस्य चरितमवलोक्य नितान्तमानन्दितः कविरुत्तमैस्तद्गुणानुवादिभिः पद्यैस्तुष्टाव. सर्वे च राजस्थानवासिनो दिल्लीपतिसामन्ताः क्षत्रियास्तस्य मेवाडनरेशस्य शौर्यं तथा स्वपावित्र्यपालनतत्परतामवलोक्य परमतुष्यन्. केचन मानसिंहप्रभृतयः स्वयंनष्टाः परानपि नाशयन्तस्तां सर्वतः प्रसृतां मेवाडपार्थिवस्य कीर्तिं स्तुतिं च समीक्ष्य खिन्ना अत्यन्तमखिद्यन्. महत्वाकांक्षिणं दिल्लीश्वरं कुटिलनीत्या क्रोधयन्तः प्रतापसिंहनाशाय प्रार्थयन्त. सोऽपि च जात्या यवनः पूर्वापेक्षया बलवतीं सेनां प्रतापसिंहपराजयाय प्रायुंक्त.

सा च सेना चतुरसेनापतिपालिता सर्वमप्यरवलिपर्वतमवरुध्य तिष्ठन्ती क्रमेणोपरिसमागता सर्वाणि शिखराण्याक्रन्तुमारभत. सर्वे वनेचराश्च सावधानाः सर्वदा महाराजं तथा तदीयं परीवारं ररक्षुः.

एकदा यवनसेनाऽतिक्रुद्धा प्राणानगणयित्वा प्रतापसिंहं दिनत्रयमनुदधाव. भूयोभूय आगच्छद्भिर्यवनसेनाक्रमणैरुद्वेजितो मेवाडनरपतिरपि भोक्तुमपि समयं नालभत. अतीते दिनत्रये शूरैर्वनेचरैर्महता शौर्येण निराकृतेषु यवनसैनिकेषु लब्धस्वास्थ्यो मेवाडभूपालः स्वनिवासं कल्पयित्वाऽवसत्. महाराज्यपि दिनत्रयमुपोषितान् बालकांस्तथा स्वपतिमवलोक्य वनेचरानीतमन्नं पाचयितुं त्वरया प्रावर्तत. तदानीं च महाराजो विशालस्याम्रवृक्षस्याधस्तादुपविष्टः स्वपत्नीं स्वयं पाकासक्तां तथा पाकैकचित्तान् परितः समुपविष्टान् बालकान् पश्यन् किमपि किमपि विचारयन्नतिष्ठत्. तदानीं च मुन्यन्नपिष्टस्य प्रथममपूपं पाचयित्वा महाराज्ञी सर्वेषु बालकेषु कनीयसे पुत्राय ददौ. स च बालको यावत्तमपूपं गृहीत्वा तदेकदेशं मुखे निक्षिपति तावदेव वनबिडालोऽकस्मादागत आक्षिप्य तमपूपं निनाय. दिनत्रयोपवासेन खिन्नो बालकस्तदानीं स्वाशां विफलां विलोक्याक्रोशन् सहसा धरणीतले पपात. पुनरपि अन्नदौर्लभ्यं जानन् दुःखेन भूमावलुण्ठत्.

धैर्यसागरस्य सकलक्षात्रियकुलमुकुटमणेर्महाराजस्य प्रतापसिंहस्य यद् धैर्यं चेतकवियोगेन वा मेवाडापहरणेन वा वनवासलाभेन वा अनेकसैनिकक्षयेन वा पृथ्वीराजभगिनीवियोगेन वा नानश्यत् तत् केवलं निरागसो बालस्य क्षुद्व्याकुलस्याक्रोशेन नष्टं. यद्यपि विचित्रमिवेदं भाति. नहि झंझावातेनापि अनुत्पाटितस्य

महावृक्षस्य मन्दवाहिना मलयानिलेनोत्पाटनं दृष्टचरं, तथापि नैसर्गिकी बालस्य भक्ष्यलाभप्रवृत्तिस्तद्वैफल्यं च कृत्स्नमपि धैर्यराशिं जहार मेवाडनृपतेः. तं चाक्रोशन्तं बालकमंके कृत्वा राजा मेवाडपालकः प्रतापसिंहश्चिरं रुरोद. अब्रवीच्च—धिङ् मां ! योऽहं हि केवलं लौकिकमहत्वाकांक्षी स्वस्य सर्वमपि गमयित्वा यदृच्छया समागतानां बालकानां पोषणेऽपि न प्रभवामि. ये खलु साधारणा जनास्तेऽपि नानाविधानि कर्माणि कृत्वा स्वपरिवारं पोषयन्ति स्वबालकान् संतोषयन्ति तावदप्यहं कर्तुं न पारये. केवलमेष मेवाडपतित्वस्य मिथ्याभिमानो मां न दहति किंतु मदीयानल्पानपि बालकान्. किमेभिरपराद्धं. एते च प्राचीनजन्मसुकृतानुरूपं मदीयमुदरमापन्नाः किमिति दुःखभाजो भवेयुः. दिल्लीपतिना समं मम द्वेषो नत्वेषां. तन्मूलकं च दुःखमपि मयैव सेवनीयं. मदर्थमेते क्लिश्यन्तइति न समीचीनं. तस्मादद्यैवाहं तं किंचिदवसरदानाय दिल्लीपतिं प्रार्थयामीति.

महाराज्ञी सर्वे वनेचराश्च तदिदं तस्य मेवाडमेदिनीपतेर्भाषणं निशम्य साश्चर्याः कुतोऽपि भूतबाधापीडितं प्रलपन्तं तममन्यन्त. ततश्च भूयो भूयस्तथैव प्रलपन्तं सावधानं तं प्रतापसिंहमवगम्य खिन्नास्ते दीना वनेचराः स्वानि भाग्यानि निन्दन्तस्तूष्णीमतिष्ठन्. सहधर्मचारिणी सती महाराज्ञी सविस्मयं शोकाकुलं स्वपतिमवदत्—नाथ? किमित्यद्येत्थं शोकव्याकुलो भवानभूत्. यो हि सागरः कल्पान्तेऽपि न स्वमर्यादां त्यजति स किं कीटकमरणशोकव्याकुलः स्वमर्यादां त्यजेत्? नाथ? इदानीं च सर्वेपि राजस्थानवासिनो जनास्त्वदेकावलंबना निभृतं यवनपीडां सहन्ते. सम्प्रति न मेवाडाधिपदिल्लीपत्योः कलहः किंतु स्वातंत्र्यपारतंत्र्ययोः

सत्यानृतयोर्वा. यदि च कुतोऽपि कारणात्त्वं पराजेष्यसे तदा कृत्स्नमपि स्वातंत्र्यं विनष्टमेव स्यात्. सर्वेऽपि भारतवासिनो जनाः सत्य एव पक्षो विजयत इति दृढं विश्वसन्ति. त्वयि सत्यपक्षपातिनि पराजितेऽवश्यमेव ते पूर्वं विश्वासं मुक्त्वाऽसत्यस्याऽपि जयो भवतीति मन्यमाना सर्वथाऽत्मानं नाशयेयुः. भारतवासिनां हि सर्वेभ्यः प्राणेभ्योऽपि प्रिया सत्यपक्षपातिता, धर्मश्रद्धा च. तद्रक्षके त्वयि क्षुद्रशोकेनाभिभूते सति कृत्स्नमपि भारतवर्षं मिथ्याध्यवसायि स्यात्. तन्न समीचीनम्. यो हि क्षुद्रस्य कृते महान्तं त्यजति स लोक उपहसनीयतां व्रजति. क्व च क्षुधातुरस्य बालकस्यान्नलाभार्थमाक्रोशः क्व चानादिकालसमागतं सिसोदयाकुलस्य पावित्र्यं, चिरमस्मत्पूर्वजैरुपभुक्ता स्वतंत्रता; शारदसुधाकरसहकारिणी यावच्चंद्रदिवाकरं स्थायिनी कीर्तिश्च यथाहि अन्ये जन्तव उत्पद्यन्ते विलीयन्ते नानादुःखान्यनुभवन्ति तथैवेमे बालका अपि. किं न शृणोषि समग्रमेवाडवासिनां दुःसहयवनपीडाशोकाकुलानां क्षत्रियाणां तदंगनानामपि हृदयद्रावकान् शोकाक्रोशान्. त्वं च राजा नाम भूत्वा शोकाकुलास्वपि स्वप्रजासु अव्यथमानः केवलमौदरिकबालस्याक्रोशेन धैर्यं विहाय सर्वं प्रयत्नं विफलीकरोषि? एतच्च ते न शोभते. कः खलु राज्ञः प्रजासु स्वसुते च प्रेम्णो विशेषः? धन्याश्च ते पुण्यश्लोका राजानो ये स्वसुतमपि बलीकृत्य प्रजापालनं समाचरन्. एतादृशाचरणेन त्वं स्वबालकानपीदमेव शिक्षयसि? एते वनेचरास्तव सत्यप्रियतां स्वातंत्र्यप्रियतां चावलोक्य त्वां साहाय्ययन्ति. त्वादृशेषु नरपुंगवेषु स्वार्थपरेषु सत्सु सा वराकी स्वार्थहानिः क्व तिष्ठतु. स्वर्गादपि

श्रेष्ठममृतादपि मधुरं प्राणेभ्योऽपि प्रियं तत् स्वातंत्र्यसुखं कथं संपादयतु.

किंच—इमे बालकास्त्वदीयमुदरं न यदृच्छया समागताः किंतु तत्र तेषां पूर्वजन्मार्जितं कर्मैव कारणं. तद्यदि तेषां मेवाडाधिपत्यं श्रेयस्करं तदा तल्लाभार्थं वा तद्रक्षणार्थं वा जायमानाः क्लेशाः कुतो न भविष्यन्ति. यो हि सुखं वांच्छति तेन दुःखानि मोक्तुमपि अवश्यं स्वहृदयं दृढीकरणीयं. तदनेन क्षुद्रेण शोकेनाभिभूतमना इतरजनवत् प्रारब्धात् कर्मणो मोपरम ! इमे सांसारिकाः शोकावेगाः पर्जन्यकाले नदीवेगा इव क्षणभंगुरा आगच्छन्ति क्षणादूर्ध्वं नश्यन्ति च. यथा च तटतरवो नदीं प्रवृद्धां वीक्ष्य न शोचन्ति नाप्युष्मणि शुष्कामवलोक्य हृष्यन्ति तथैव धीरा जना इमान् क्षणिकशोकावेगान् सहमानाः कर्तव्यपराङ्मुखा न भवन्ति. तदिमां शोककणिकां विधूय पुनरपि सोत्साहं दिल्लीपतिना समं युध्यस्व. अचिरादेव त्वां भगवानेकलिंगः श्रीनाथश्च विजयिनं करिष्यत इति.

महाराजः प्रतापसिंहः स्वजायाया इदमोजस्वि प्रभावशालि भाषणं निशम्य न्यूनीभूतशोकोऽपि सम्यगजागृतसदसद्विवेकबुद्धिः किमपि न निरणयत्. वनेचराश्च देवीभाषणमेवान्वमोदन्त.

अत्रान्तरे कश्चन यवनपक्षपाती तं शोकसागरनिमग्नमवलोक्य सानन्दस्तां वार्तां स्वाधिपाय सेनापतये जगाद. स तु साधारणमतिरस्य प्रतापसिंहनिर्वेदस्य किमपि स्वाभिलषितं फलं लिप्सुः केनाऽपि प्रकृष्टमतिना कुशलेन लेखकेन श्रीमेवाडाधिपतिहस्ताक्षरांकितमिव नूतनं संधिपत्रं विरचय्य केनापि रजपूतदूतेन समं दिल्लीपतिसन्निधौ प्रेषयामास. स च दूतः कतिपयदिवसैर्दिल्लीनगरं

प्राप. सत्वरमेव राजप्रासादे कृतप्रवेश आत्मानं महाराजमेवाडाधिपतिप्रेषितं निवेदयामास. दिल्लीश्वरश्च द्वारपालसमानीतामिमां वार्तां निशम्यातिविस्मितः सत्वरं तं प्रवेशयितुं द्वारपालानादिदेश. द्वारपालैः प्रवेशितः स यथानियमं नमस्कृत्य तस्मै तत् कृत्रिमं संधिपत्रमदात्. तच्चेत्थम्—दिल्लीपते ! अहं च संप्रति त्वदीयसेनया हृतवीर्यः किमपि चेष्टितुमशक्तोऽस्मि. तत्कातिपयमासावधिदानेन मामनुगृहाणेति.

दिल्लीश्वरोऽकबरस्तदिदं श्रीमन्महाराजमेवाडाधिपतिहस्ताक्षरांकितं संधिपत्रं लब्ध्वा कृतकृत्यः स्वर्गाधिपादपि आत्मानं श्रेष्ठमन्यं च मन्यमान आनन्दातिरेकेण मूर्च्छन्निव तस्मै सेवकाय तथा तदधिपाय बहुलं पारितोषिकं विततार. अचिरादेव मुख्यममात्यमाहूय स्वविजयं विख्यापयितुं राजसभां विधातुमादिदेश.

सा वार्ताऽचिरादेव घोषकघोषिता सर्वनागरिकजनमुखसंचारिणी जिज्ञासाविषयोऽभूत्. सर्वे जना यवना आर्याश्च तामिमां वार्तां मिथ्याऽमन्यन्त. कस्यचित् प्रतापसिंहद्वेषिणो नराधमस्येदं कृत्यमिति निरणयन्. क्षत्रियराजाश्च स्वाभिमानशालिनः सुतरां दुःखायन्ते स्म. स्वाभिमानहीना मानसिंहप्रभृतयः क्षत्रियराजाः स्वसाम्यमागतं प्रतापसिंहं मन्वाना अतिसुखायन्ते स्म. वाचकाः ! खलानामेवं स्वभावो यत्ते सदा स्वयमधोगता उन्नतानप्यधोगमयितुमिच्छन्ति प्रयतन्ते च. परन्तु भगवान् परमात्मा स्वेच्छया स्वसामर्थ्येन च समुन्नतान्न कदापि अधोगामिनः करोति. अस्तु.

अथ दिल्लीश्वरस्य दुरभिमानं बुद्धिचातुर्यं लौकिकमहत्वाकांक्षां च द्रष्टुमिव मध्यान्हमारूढे भगवति सवितरि राजाऽकबरः स्वनियोगानुरूपं समागतैः सामन्तैरधिष्ठितां राजसभामाजगाम. सिंहा-

सनमधिवसतस्तस्य नियोगेन प्रधानामात्यः—सभ्याः ! सामन्तश्रेष्ठाः ! अयं दिवसः खल्वतिशुभो यतोऽद्यैव श्रीमहाराजप्रतापसिंहेन संधिपत्रिका स्वामिनां चरणसंनिधौ प्रेषिता. यद्यपि महाराजो लोकोत्तरशौर्यशाली तथापि समस्तभारतवर्षचक्रवर्तिनोऽनेकसामन्तगणवन्दितचरणस्य, अपारसेनासागररक्षितस्य, अतिकुशाग्रमतिमानसिंहप्रभृतिसेनापतिसहायस्य दिल्लीश्वरस्य पुरतो मेवाडाधिपतिर्नाम कियती मात्रा. पुरैव तावद्द्रोहं त्यक्त्वा यदि प्रतापसिंह इतरराजवदनंस्यत्तदा साध्वभविष्यत्. अस्तु. अनेन संधिपत्रेण च श्रीदिल्लीश्वरस्य प्रतापः सर्वस्मिन् राजस्थानेऽव्याहतः प्रकाश्येतेत्यत्र न संशय इत्युक्त्वा तत्संधिपत्रमनुवाच्य सर्वेषां मान्यानां हस्तेषु तत् सत्यं नवेति परीक्षणाय ददौ.

सर्वेऽपि तत्रत्याः क्षत्रियराजा अज्ञातप्रतापसिंहहृदयाः केवलं बाह्याक्षरसाम्यं कुशललेखकसंपादितमवलोक्य मुग्धमतयो राजस्थानसौभाग्यं नष्टमवचिन्त्य निभृतमशोचन्. क्षुद्रा मानसिंहप्रभृतयः श्रीप्रतापसिंहशत्रवः परममोदन्त.

---

( ४ )

अथ विस्तीर्णाक्षिकमलः प्रलंबमानबाहुयुगलो विशालवक्षाः स्वाभिमानी बिकानेरनरेशस्य बन्धुः पृथ्वीराजः सहसाऽऽसनादुत्थाय यथानियमं मुकुलितहस्तयुगलो दिल्लीश्वरं व्यज्ञापयत्—स्वामिन् ! सकलसत्यासत्यनिर्णयकारी भवानिति सर्वत्र लोके प्रसिद्धं. अहं च यावद्विभावयामि तावदिदं कस्यचिद्दुरात्मनः प्रतापसिंहपराक्रमकलुषितमतेः निष्कलंकस्य प्रतापसिंहचारित्रस्य दूषणाय चेष्टितमिति मन्ये. राजन् ! अहं हि सम्यक् तत्रभवतो-

मेवाडाधिपतेरन्तःकरणं जानामि. स च कदापि लौकिकविषयोपभोगाकृष्टमनाः पारतंत्र्यं नांगीकुर्यात्. मानी मृगराजो यथा बुभुक्षितोऽपि न मृगवत्तृणमत्ति तथैव महाराजो मेवाडनरपतिस्त्वया हृतराज्यः परं क्लेशितोऽपि न पारतंत्र्यभाक् भूत्वा त्वदीयां कृपां प्रार्थयेत. यवनपते ? स खलु परमपवित्रे रामचन्द्रजन्मपरिपूते सूर्यवंशे समुत्पन्नः सूर्य एवाऽस्ति किंबहुना यद्यपि सूर्यः प्रतीच्या उदयेत्—यदि वा समुद्रः स्वमर्यादामतिक्राम्येत्-यदि वेमानि नक्षत्रमण्डलानि भूमौ निपतेयुस्तथापि महाराजस्त्वां न शरणमागमिष्यतीति मे मतिः. क्षुद्रा अस्मादृशा जननीजठरभारभूता जनास्त्वां तदीयस्वातंत्र्यापहारोत्सुकं वीक्ष्यैदृशैः कुकर्मभिस्त्वां सन्तोषयन्तः श्ववत्तव कृपां संपादयितुं प्रयतन्ते. तत्सकलन्याय्यान्याय्यविचारशीलोऽखिलप्रजाहितदक्षो भवानीदृशैर्मायाजालै र्मा मुह्यतु. सामंजस्येन परीक्ष्य कृतं कर्म नानुतापमावहति. तस्माद्यदि मामाज्ञापयसि तदाऽहमेव तस्मै मेवाडरवये पत्रं लिखित्वा सत्यं वृत्तमधिगम्य ते निवेदयिष्यामीति.

निशम्य च पृथ्वीराजस्येदं भाषणं सर्वे सभ्या द्विधाभूतचित्तवृत्तयोऽजायन्त. ये च सत्यपक्षपातित्वेन प्रतापसिंहपक्ष्या आसंस्तेऽत्यन्तं मुमुदिरे. ये तु स्वाभिमानशून्या ऐहिकवैषयिकभोगसक्ता आसन् मानसिंहप्रभृतयः तेभ्यो नात्यरोचत.

दिल्लीपतिरकबरस्तु निस्पृहस्य तस्य पृथ्वीराजस्य भाषणं निशम्य विस्मितस्तमेवावदत्—पृथ्वीराज ? त्वयैव तावत् स्वयं मेवाडाधिपाय पत्रं लिखित्वा सत्यं किमिति प्रथमतो ज्ञेयं पश्चात् मह्यं कथनीयम्. यदीदं सत्यं स्याच्चेद्वरमेव. यदि तु मिथ्या भविष्यति तदा पवित्रां मेवाडाधिपस्य कीर्तिं कलंकयितुमुद्यतं नरा-

वममहं दण्डयिष्यामीति. ततश्च सभां विसर्जयित्वा स्वावासमाजगाम यवनपतिः.

अथ स्वनिवासमागतः पृथ्वीराजः सविस्तरं पत्रं मेवाडाधिपाय लिलेख—तच्चेत्थम्—सकलक्षत्रियकुलावतंस ! नृपतिकुलमुकुटमणे ! स्वतंत्रतादेवीभक्तवर ! स्वदेशाभिमाननिधे ! पवित्रसिसोदियान्वयसूर्य ! मेवाडाधिपते ! महाराजप्रतापसिंह ! अहं बिकानेरनृपस्य कनीयान् बन्धुः पृथ्वीराजस्त्वां विज्ञापयामि. राजराजेश्वर ! दिल्लीपतेः संनिधौ युष्माभिः संधिपत्रं प्रेषितं किं ? अहं तु कदापि तत् सत्यमिति न भावयामि. स्वामिन् ! वयं च सर्वे राजस्थानवासिनः पुरुषाअपि स्त्रीसमाः पौरुषहीनाः केवलं त्वत्त एव राजस्थानस्य स्वातंत्र्यं प्रशास्महे. अस्माभिश्च राजस्थानवासिभिर्न केवलं स्वातंत्र्यमेव दिल्लीश्वराय प्रदत्तं किंत्वस्मत्कुलस्य पावित्र्यं तथा कृत्स्नोऽप्यभिमानः समं राजस्थानराजरमणीपातिव्रत्येन बलाढ्यस्य नीतिविदो अकबरस्य चरणयोरर्पितं. वयं च न नरपशवः परेण यवनाधिपतिना जिताः परन्तु यदर्थमसंख्या राजस्थानललनाः स्वप्राणानपि आनन्देन व्यसृजंस्तदेव पातिव्रत्यं सर्वेषां नः पुरतो राजा दिल्लीश्वरः स्वायत्तं करोति तथापि वयं न लज्जामहे. नाथ ! यद्यपि त्वं मन्येथाः सुखेन वयमत्र जीवाम इति, परन्तु परमपवित्रं ते चरणारविन्दं शपथीकृत्याहं वदामि—यथा हि पशवो जीवन्ति तथैव वयमत्र जीवाम इति. प्रतापसूर्य ! ते हि जीवन्ति येषां स्वातंत्र्यं तथा कुलमर्यादां स्त्रीणां पावित्र्यं च न कोपि दूषयितुं समर्थो भवति. महाराज! अत्र यो हि नौरोजनामा महान् प्रसिद्ध उत्सवो भवति तत्र कस्य वा भार्यायाः पावित्र्यं न दूषितं. का वा क्षत्रियांगना तत्रगता प्राणप्रियस्य पातिव्रत्यस्य हरणा-

लज्जाधोवदना रत्नाभरणमण्डितगात्रा सायं स्वभवनं नागच्छति—यथा हि नोऽबलानामबलानां पातिव्रत्यं निःशंकं निर्भयं दिल्लीपति र्विक्रीणाति तथैव पवित्रसिसोदियाकुलजन्मधन्यानामंगनानामपि पातिव्रत्यमत्रानीय मा विक्रीणातु सार्वभौममदशाली यवनाधिपतिः. वयं च सर्वदा रात्रिंदिवं परमात्मानं प्रार्थयामः—

सकलचराचरपालक ? सर्वशक्ते ? सर्वज्ञ ? यदि दुर्दान्तान् मदोन्मत्तान् यवनान् नाशयितुमिच्छसि तदाऽवश्यमेव तं मेवाडाधिपतिं पालय. स एव पालितो भाविक्षत्रिय-जनकं क्षत्रबीजं पालयिष्यतीति. तन्नाथ ! कदापि त्वमनेन कपटिना दिल्लीश्वरेण संधातुं मनो मा कुरु. भगवानेकलिंगः पुनरपि शीघ्रमेव त्वां चितोडाधिपतिं करिष्यति. राजन् ! त्वं हि आत्मानं हृतराज्यं दारिद्र्यपीडितं मा मन्यस्व. ये खलु स्वभगिनीं वा कन्यां वा यवनाय दत्त्वा लब्धं भगभाग्यं भुञ्जते ते केवलं नरकमेव भुंजते. पूज्यपाद ? एतादृशैः कुकर्मभिर्लब्धमैश्वर्यं सत्यमैश्वर्यपदवाच्यं भवेद्वा ! त्वादृशा अस्मै ऐश्वर्याय स्पृहयेयुर्वा ! कीटका एव नरकाय स्पृहयन्ति न मानवाः. पुण्यश्लोक ? दुस्तरे पारतंत्र्यनरके पचन्तो वयमेव दारिद्र्यपीडिता हृतसर्वस्वाः स्मः यं हि जना देववत् परिपूजयन्ति, यस्य च नामग्रहणेनात्मानं परिपूतान् मन्यन्ते, स च धर्मराजसदृशः पवित्रविमलकीर्तिपरिमलसुगन्धितनिखिलदिशः प्रतापसिंहो हृतसर्वस्वः कथं स्यात्. यद्यप्यधुना त्वं शारीरिकीभिर्मानसिकीभिः यातनाभिः पीडितः स्यानाम तथापि भविष्यन्त इतिहासविदस्त्वां क्षत्रियजातिबीजरक्षकत्वेन निदर्शयेयुः. सम्राट् दिल्लीपतिरपि न तावच्चिरंजीवी. स च समाप्ते सुकृते पुनरपि स्वकुकर्मफलानि भोक्तुमन्यं लोकं यायादेव.

यादृशानि प्राणात्ययेऽप्यसह्यानि अपमानदुःखानि रात्रंदिवमिह वयं भुञ्जामहे तादृशानि दुःखानि पवित्रबाप्पारावळवंशजा मा भुञ्जन्ताम्.अस्मिन् दुर्निवार्ये यवनराज्यप्रलयसमये सर्वेऽपि आर्या भगवत्यधोक्षज इव त्वयि दत्तनिर्भरास्त्वत्त एव पुनरप्युद्धारं सनातनधर्मस्य वा स्वराज्यस्य वाऽऽशासते. त्वदीयाः पूर्वजास्तथा त्वमपि केवले स्वखड्गे तथा स्वशौर्ये विश्वस्य राज्यमकरोस्तथा च सिसोदियाकुलसंभवा राजानोऽन्येषां साहाय्यमपि न याचन्ते. महात्मन् ! अस्मिन् परिवर्तिनि संसारे कोवाऽद्यावधि सम्राट् समानोदयः स्थितः, सर्वे च स्वसुकृतानुरूपं भूतलस्वामित्वाभिमानं धारयन्तः परैश्च कलहायमाना मदोन्मत्ताः परान् पीडयन्तः परेषां शीलमपहरन्तो यथेच्छं पापानि अर्जयित्वा नरकलोकं गच्छन्त्येव. तत् क्षुद्रस्य क्षणभंगुरस्य दुःखस्य भीत्या निसर्गदत्ता स्वतंत्रता तथा स्वशीलपावित्र्यं समुत्सृष्टव्यमिति न न्याय्यं मे आभाति. क्षत्रियश्रेष्ठ ! साम्प्रतं हि ग्रीष्मकाले सूर्य इव स्वप्रतापानलेन सर्वमपि राजस्थानगतं क्षत्रियबीजं भस्मीकरोति दिल्लीश्वरः तत्र मानसिंहसदृशाः कुलांगाराः साहाय्ययन्ति च. परन्तु सकललोकपालको जगदीश्वरो यदा समयं परिवर्तयिष्यति यदा च प्रखरोऽपि सूर्यो मेघपटलैराच्छादितः स्वसंतापं त्यक्ष्यति तदा सर्वा मेदिनी पुनरपि जलदजलवर्षाविक्लिन्ना अंकुरयोग्या भविष्यति. तदानीं च क्षत्रियबीजं त्वत्त एव संपाद्य पुनरपि अस्मिन् राजस्थाने अन्ये जनाः क्षत्रियजातिं वर्धयिष्यन्ति. यदि च त्वमपि अस्मदादिवत् कर्तव्यपराङ्मुखो भूत्वा स्वकुलमर्यादां त्यक्त्वा स्वबीजं कलंकयिष्यसि तदा राजस्थानमेदिनी जलदैर्जलवर्षावेण सिक्ताऽपि बीजाभावाद्विफला भविष्यतीति निश्चयेन जानीहि. राजन् ! अचिरा-

देव पुनरपि श्रीनाथकृपया त्वामाश्रित्य क्षत्रियजातिः सतेजस्का दिल्लीपतिं विजेष्यते. अत्रस्था वयं सर्वे क्षत्रिया बन्दिनो अकबरस्य स्तुतिपाठान् पठामः स चास्माकं शीलं सम्पदं तथा अस्मदंगनानां पातिव्रत्यं सर्वमपि यथेच्छं व्यवहरन् अधोगच्छति. सिसोदियाकुलचन्द्र ! प्रतापसिंह ! सकलजगच्चालकः परमात्मा तव कुलस्य पावित्र्यं तथा त्वदंगनानां शीलं रक्षति. स एव पूर्ववदग्रे साहाय्यं विदधातु. धैर्यनिधे ! किं बहु ब्रवीमि. यथा मादृशाः क्षुद्रा राजानः स्वशीलं स्वांगनापातिव्रत्यं दिल्लीश्वराय समर्प्य जीवन्ति तथा त्वं मा भूरिति.

वाचकाः ! ये खल्वद्यावधि भारतवर्षे महंमदीयधर्मानुसारिणो नृपा अभवंस्तेषु सर्वेष्वपि अकबरः समशीलः प्रजाहितदक्ष आसीदिति सर्वेऽपीतिहासकारा वदन्ति. परन्तु सोऽपि कियान् कपट्यासीदित्युपरिलिखितं पृथ्वीराजपत्रमेव दर्शयति. स च कपटचतुरोऽल्लाउद्दीनवत् बलात्कारेण परदारान् भोक्तुमनिच्छन् नौरोजनामानं नूतनमेवोत्सवं चक्रे. तत्र चेयान्विशेष आसीद्यत्सर्वोऽपि व्यवहारः स्त्रीभिरेव करणीय इति. न तत्र पुरुषाणां प्रवेशः. एवं पुरुषप्रवेशे निषिद्धेऽतिकुलीना रजपूतक्षत्रियांगना विस्रब्धं संचरन्त्यो अनायसेन दृष्टिगोचरा अभवन्. तासु या लावण्यवती निभृतं पश्यतो वा स्त्रीवेषं धृत्वा तस्मिन् स्त्रीसमुदाये संचरतो वा दिल्लीश्वरस्य चित्तमाहरेत्तां येन केनापि प्रकारेण संपाद्य स स्वकामवासनां शमयति स्म. यद्यप्येतत्सर्वं वृत्तं मान्याः क्षत्रियराजा अजानन् परन्तु पारतंत्र्यविलुप्ततेजसो न किंचिदपि कर्तुं पारयन्ति स्म. अस्मिन्विषयेऽस्यैव पृथ्वीराजस्य कथाऽस्ति.

एकदा दिल्लीनगरे स्वज्येष्ठबन्धुना सममस्मिन् पृथ्वीराजे वस-

ति सति अयं नौरोजनामोत्सवः समायातः. तत्रेतरजनवदाहूता पृथ्वीराजभार्या स्वयात्रा समं तमुत्सवं द्रष्टुं जगाम. यथा हि राजस्थानवासिनः क्षत्रियाः क्षणमात्रं स्वासिलतां न विस्मरन्त्ये-वमेव रजपूतक्षत्रियललना अपि स्वल्पां तीक्ष्णधारां च्छुरिकां. समये च तयैव शत्रुकण्ठनालं विदार्य स्वशीलं रक्षन्ति. अस्तु. तत्र गते ते चिरमितस्ततः पर्यटन्त्यौ क्वचित्तस्थतुः तत्र च स्त्रीवे-षधारी दिल्लीपतिरागतस्तां पृथ्वीराजस्य भ्रातृजायां लावण्य-वतीमवेक्ष्य कामातुरः केनापि मिषेण तामन्यत्र नीत्वा तस्याः पातिव्रत्यमपाहरत्. पुनश्च पृथ्वीराजपत्नीमपि दूषयितुकामस्तामपि एकान्तेऽनयत्. सा तु सत्यव्रता सिसोदियाकुलसंभवा तं दिल्ली-पतिं स्वपातिव्रत्यहरणायोद्यतमवगम्य क्रोधान्धाऽतिदीर्घाभ्यां नेत्रकमलाभ्यां स्फुलिंगान् वर्षन्तीव दैत्यवधायावतीर्णा देवीव तां च्छुरिकां स्वहस्तेन गृहीत्वा तस्य नीचस्य दिल्लीपतेरुरसि तथाऽ-स्थापयद्यथा स तस्मात् स्थानाच्चलितो भिन्नोरम्क एव भवेत्. अब्रवीच्च तं—नराधम ! पापकीट ! यवन ! त्वं हीदृशैः कर्मभिः पवित्रं क्षत्रियाणां दिल्लीनगरगतं सिंहासनं कलंकयसि. पापमते ! यथाऽन्या अंगना भीत्या वा धनेन वा विनयेन वा चाटूक्ति-भिरेव वा वश्या भवन्ति तथैवेयमपि स्यादित्यमन्यथाः ! परन्तु मदीयं कुलं पवित्रं सिसोदियाकुलं नास्मरः. मानवराक्षस ? त्वं प्रकटं बलात्कुर्वद्भ्यो अल्लाउद्दीनप्रभृतिभ्यो यवनेभ्योऽपि भयंकरो-सि. ईदृशं गोरुपं धृत्वा स्त्रीसमुदाये चरन् कथं न लज्जसे. अथवा यदा नरपशवो मानसिंहप्रभृतयः स्वयमेव स्वभगिनीस्तुभ्यमर्पयान्ति तदा प्रवृद्धा तव कामवासना कथं त्वां कुमार्गगामिनं न कुर्यात्! यद्यप्यधुनाऽन्यो नास्ति क्षत्रियांगनापातिव्रत्यरक्षक ऋते प्रताप-

सिंहात् तथापि भगवती देवी विंध्यवासिनी सदैव क्षत्रियरमणीनां पार्श्ववर्तिनी भूत्वा तासां पातिव्रत्यं रक्षति. अतएवाद्यापि मादृशाः क्षत्रियांगना अवशिष्टाः सम्प्रति यावत्त्वं नान्यान् परदारान् पुनरपि दूषयिष्यामीति न प्रतिजानासि तावत्त्वां न मोक्ष्यामीति जानीहि. तच्छीघ्रमेव तथा शपथीकृत्यात्मानं मोचयेति.

अकबरस्तु तस्यास्तदुग्रं दुर्दर्शं स्वरूपमालोक्य भीतस्तथा शपथीकरणं विनाऽऽत्मनो मोक्षमशक्यं मन्वानोऽगत्या तथा शपथं जग्राह. ततश्च सा यशस्विनी पृथ्वीराजभार्या स्वतेजसा निर्जित्य पापिनं दिल्लीश्वरं स्वनिवासमाजगाम. अकथयच्च सर्वमपि वृत्तं स्वभर्त्रे. स तु तन्निशम्य तादृशभार्यालाभेनात्मानं धन्यंमन्यः स्वज्येष्ठबन्धुमपृच्छत्—बन्धो ! त्वदीया पत्नी नौरोजोत्सवाद्रिविधानलंकारान् संपाद्य रशनानिनादशब्दायितसकलभवना भवनमागता परन्तु कृपया तस्या मुखं पश्य. तत्तु आमावास्याया अपि कृष्णतममिति जानीहीति.

सज्जनाः ! इतिहासप्रमाणयाऽनया कथया दिल्लीश्वरस्याकबरस्य नीतिः कथितैव. राज्यमदो हि किं किं न कुर्यात्. ये खलु श्रीरामचन्द्रादयः पुण्यश्लोकाः केचनैव राजानो मातृवत् परदारास्ववर्तन्त तत्र कारणं तेषां पूर्वजानां तथाभूताः संस्काराएव. अधुनाऽपि संस्कारहीना अप्यार्यकुलसंभवाः परदारासु यादृशीं चित्तवर्त्तिं धारयन्ति तादृशीं नाधुनिका अपि यवनाः किमत्रान्यत् कारणं? ऋते अनादिकालसंपादितेभ्यः सूक्ष्मेभ्यः 'परदाराभिमर्शो हि महापातकमिति' संस्कारेभ्यः. धन्याश्च ते विद्याविलासानिर्मलमतयः प्राचीना ब्रह्मर्षयो राजर्षयश्च. यैः स्वसंतानरक्षणार्थं बहु चेष्टितं. यवनानां च मनसि परदाराभिमर्शः पातक-

मिति कल्पनाऽपि न संभवति. यतस्तेषां प्रमाणग्रंथेऽपि परदारा आक्रम्य स्वभोग्याः करणीया इति स्पष्टमेवास्ते. यथा तथा वा भवतु. परन्तु पितृवत् सर्वैरपि प्रजाजनैः सम्मानितस्य सार्वभौमस्य स्वप्रजाभिः सममीदृशं वर्तनं तत्रापि स्वकन्यानामिव विश्वस्तानां रजपूतक्षत्रियांगनानां कपटेन पातिव्रत्यहरणं नामाधमं चेष्टितं. ततोऽपि नौरोजोत्सवमिषेणान्यपुरुषप्रवेशं निषिध्यासहायानामबलानां शीलभ्रंशनमित्यधमतमं कर्मेति मन्ये. नैतत् क्वापि दृष्टचरमिति विरमामः पापाचारवर्णनात्.

( ५ )

पृथ्वीराजश्च तत् पत्रं परमविश्वस्तेन स्वहृदयेनेवातिकुशलेन सेवकेन समं मेवाडनृपतेः सन्निधौ प्रेषयामास. सोऽपि सेवकः स्थाने स्थाने निवसतो निरीक्षणार्थं स्थापितान् यवनसैनिकसमुदायान् परित्यज्यारवलीमध्यमागतः केनाऽपि वनेचरेण समं समागतो विषण्णं दीनवेषधारिणं परिधूमितमग्निसंचयमिव मेवाडनरेशमपश्यत्. स च सुप्तो मृगराज इव प्रभावशाली वनेचरनिवेदितवृत्तस्तस्मात् सेवकात्तत् पत्रं गृहीत्वाऽऽत्मगतमपठत्. स तु तत् पत्रं यथा यथा पपाठ तथा तथा तस्याक्षिणी रक्ततरे अभवताम्. भालं च क्रोधवल्लीमाण्डितमभवत्. मुखं चातिदीर्घानुष्णान् श्वासानमुंचत्. यवनसाम्राज्यस्यार्गलेव दीर्घो बाहुश्चिरसहचारिणीमसिलतां पुनरप्यन्वैषयत्. समाप्ते च तस्मिँल्लेखे मेवाडपार्थिवो हस्तनिहितमूर्धा दीर्घमुष्णं च निश्वस्य जगाद—प्रभो ? सर्वचराचरापालक ? सर्वे-

साक्षिन्! कमलापते ? यदि त्वमेव मम हस्तेन राजस्थानमेदिनी-स्वातंत्र्यं रक्षयितुमिच्छसि तदाऽहमपि सन्नद्धोऽस्मि. मयाऽपि अद्यप्रभृति संसारमोहो दूरमुत्सारित एव. बलमदोन्मत्तैर्यवनैः पशुवदाक्रान्तानां क्षत्रियांगनानामाक्रोशाः क्षुधातुरस्य बालकस्याक्रोशात् सत्यमेवातिरिच्यन्ते. तदहमपि यावज्जीवं मेवाडमेदिन्याः स्वातंत्र्यरक्षणार्थं तथाऽऽर्यमहिलानां पातिव्रत्यरक्षणार्थं प्रयतिष्य इति शपथमद्यैव करोमि. इति. उक्त्वाचेदं तं सेवकमप्यब्रवीत्—भद्र! त्वमपीतो गत्वा स्वस्वामिनं वद. सम्यगुपकृतं त्वया. अस्मिन् प्रतापे जीवति सति सिसोदियाकुलसंभवानां नारीणां शीलं कदापि नौरोजोत्सवे शक्रेणाऽपि न लभ्येत् किमुत वराकेण दिल्लीपतिना. अद्यापि क्षत्रियबीजं न समूलं नष्टमिति यावज्जीवमहं तस्मै मदोन्मत्ताय दिल्लीश्वराय दर्शयिष्याम्येव. अस्मादृशेषु पुरुषेषु लज्जां विहाय तूष्णीं तिष्ठत्सु सत्सु ता अबलाः किं कुर्युर्नाम. तस्मात्त्वमपि वद दिल्लीश्वराय ' मेवाडभूपतिर्मरणादूर्ध्वं संधिमिच्छतीति इति.

महाभागा देवी तथा सर्वे तत्रस्था वनेचरा अकस्मादेव प्रकृतिस्थं महोत्साहं महाराजं वीक्ष्य सन्तुष्टा आनन्दपरिपूर्णास्तस्मिन्दिने महोत्सवं चक्रुः. ततश्च पुनरपि महति प्रभाते समुत्थाय ते वनेचराः समं महाराजेन बिलासमग्नं मद्यपानविकलसैनिकं, अनवहितं तद्यवनसैन्यमाक्रम्य मृगयूथं मृगराजइव कांदिशीकं चक्रुः सर्वे च ते यवनसेनापतयोऽकस्मादागत्य युध्यमानं मेघपटलमुक्तं सूर्यमिव प्रखरं तं मेवाडराजमवलोक्य विस्मिताः कथं कथमपि स्वप्राणान् गृहीत्वाऽन्यत्र गच्छन्तः पलायन्ते स्म.

कपटलीलानायको दिल्लीश्वरो अकबरः सेनापतिनिवेदितानि महाराजप्रतापसिंहस्याक्रमणानि निशम्य सचिन्तस्तत् संधिपत्रं मिथ्यैवामन्यत. पृथ्वीराजस्तु परमात्मानं स्तुवन् जयार्थं प्रार्थयामास. मानसिंहप्रभृतयस्तु पुनरपि महाराजप्रतापसिंहप्रतापसूर्यमुदितमवलोक्य घूका इव तूष्णीमतिष्ठन्. राज्यस्थानवासिनश्च पुनरपि स्वातंत्र्याशां दधुः.



# १३ स्वराज्यलाभः

१ स्वदेशत्यागेच्छा.
२ द्रव्यलाभः
३ यवनपराजयः
४ उदयपुरनिवासः

( १ )



एवं महाराजः प्रतापसिंहो महतोत्साहेन पुनरपि यवनसेनया समं योद्धुं प्रारभत. दिल्लीपतिरपि अवमानित इव क्रुद्धः प्रतापसिंहजयार्थं भूयोभूयः सैन्यं प्रेषयामास. पुनरपि सैवावस्था प्रतापसिंहस्य तथा तदीयकुटुंबस्याऽजनि. ते च वनेचराः प्राणेभ्योऽपि महाराजं सकुटुम्बं रक्षयितुं प्रयतमाना अपि समये समये क्रूरैर्यवनसैनिकै राक्रान्ता न शेकुः. ये खलु क्षत्रिया राजस्थानात् साहाय्यार्थमागच्छंस्तेऽपि प्रायः स्वर्गं गता अवशिष्टाश्च योद्धुं निराशा इवाजायन्त. महाराजः प्रतापसिंहश्च तेषां स्वसहायानां वनेचराणां तथा रजपूतक्षत्रियाणां दुःसहान् दुर्दर्शांश्च क्लेशानवेक्ष्य प्रतिदिनं वर्धमानां यवनसेनां च खिन्नः स्वयं विचारयति स्म—किं सम्प्रति मम युद्धेन प्रयोजनं. सर्वे च प्रमुखा राजस्थानवासिनो राजानो विस्मृतस्वस्वभावा ऐहिकैश्वर्यलोभाकृष्टास्तं दिल्लीपतिं सेवमाना न केवलं स्वस्वातंत्र्यमनाशयन् किंतु भगिनीदानेन स्ववंशपावित्र्यमपि.

एतेषां मुख्यानां राज्यस्थानवासिनां राज्ञां वर्तनमवलोक्याऽन्येऽपि क्षुद्रा जनाः क्षुद्रैर्यवनैः समं सम्बन्धमाचरन्. तेन राजस्थानपावित्र्यं तु दूषितमेव. स्वातंत्र्यं तु मामवाधीनं कदाऽपि पुनरपि लभ्येत. इदं तु संकरदूषिताभिः प्रजाभिर्जन्मशतेनापि अलभ्यं. मां च स्वातंत्र्यस्य पावित्र्यस्य च रक्षणार्थं प्रयतमानं न केऽपि राजानः साहाय्ययन्ति. प्रत्युत मामपि आत्मसदृशं विधातुं प्रयतन्ते. अयं हि मानसिंहः स्वभगिनीदानेन कलंकितोऽपि पुनरपि मां तथाकर्तुं प्रयतते. महाभागा ये खलु वनेचरा अत्र सन्ति ते च दीनाः संख्ययाऽप्यत्यल्पा एव. एतेषां साहाय्येन प्रलयपयोधिवद्वर्धमानां यवनसेनां जेतुमहं कथं शक्नुयां. ये च पूर्वे मे सहायास्ते च क्रमेण वर्धमानमैश्वर्यं दिल्लीश्वरस्यावलोक्य सम्प्रत्युदासीना इव लक्ष्यन्ते. तत् सम्प्रति राजस्थानविजयेनापि किं? यद्यपि अहं विजेष्ये मेवाडमेदिनीं तथापि तत्र निवसद्भिः प्रमुखैर्यवनसंबंधदूषितै राजकुलैः समं शरीरसंबंधो दुर्निवार्यः स्यात्. तद्वरमन्यत्रामानुषे स्थाने नूतनराज्यनिर्माणेनावस्थानमिति.

यद्यपि मेवाडमेदिनीपतेर्मनासि स्वमातृभूमेरभिमानो महानासीत्तथापि यथा यथा यवनसेनासंमर्दोऽवर्धत तथा तथा विषण्णस्य तस्य मनसीमे विचारा मूलमबध्नन्. यथा यथा च यवनसेनाऽकस्मादाक्रमणैर्महाराजं पराजयत तथा तथा राजस्थानवासिनां स्वातंत्र्योपभोगेच्छाऽपि अनश्यत्. ते च पुनरपि महाराजप्रतापसिंहस्य पूर्ववद्राजस्थाने सौराज्यमसंभवि मन्यमाना इतरजनवद्यवनसेवायामेवारमन्त. ईश्वरवितीर्णां दशां साधु मन्यमाना न ते पारतंत्र्यखेदमवहन्.

इमां राजस्थानवासिनां चित्तवृत्तिं तथा स्वावस्थां च विभाव्य

विचारयितुकामो महाराजः प्रतापसिंहः स्वसहायानाहूय कर्तव्य-मपृच्छत्.

ते च सर्वे मिलिता महाराजं निस्तेजस्कवदनकमलं मेघपटलाच्छादितं सूर्यमिव वीक्ष्य सचिन्तास्तूष्णीमतिष्ठन्.

वाचकाः ! पश्यत दैवस्य दुर्विलसितं. यो हि महार्घरत्नमण्डितमेवाडसिंहासनमारुढोऽतिविचित्रासनोपविष्टैः स्वसामन्तैस्तथा सहायैः समं नानाविधानालापानकरोत्. सुवर्णयष्टिधरप्रदर्शितमार्गः स्वसभास्थानमागच्छत्. मेघावलीतिरस्कृतसूर्यमण्डलेऽपि दिने आतपवारणार्थं श्वेतं छत्रमबिभः स एव महाराजो मेवाडाधिपः सम्प्रति विपद्ग्रस्तोऽशरणोऽसहाय एकाकी महतः पादपस्याधस्ताज्जीर्णे तृणासने समुपविष्टः क्रमेण समागच्छतः क्षत्रियान्वा वनेचरान् वाऽपश्यत्. तेऽपि चासंस्कृतकेशकलापं, सततं चिन्तया शुष्कगात्रं प्रकटं दृश्यमाननाडीजटिलदेहं महाराजमप्यपरवनेचरमिव भासमानं मेवाडनरपतिं वीक्ष्य साश्रुलोचनास्तूष्णीं भूमितल एवोपविविशुः. धन्यः स ईश्वरो वा विधिर्वा! स हि स्वेच्छया सदा विचित्रमिदं संसारचक्रं परिवर्तयति. वयं च वृथैव संपदागमे हृष्यामो विपत्सु च विषीदामः. यथा हि सूत्रधारोपदिष्टमार्गेण नाटयन्तो नटाः संप्राप्तेषु हर्षविषादसमयेषु न मोदन्ते नापि खिद्यन्ति तथैव परमेश्वरविरचिते संसारनामनि महानाटके स्वस्वकर्मानुरूपं नाटयद्भिर्जीवैः कदापि खेदो वा मोदो वा न कर्तव्य एवेति तु उचितमप्यशक्यमिति वदामः अस्तु. प्रकृतमनुसरामः.

जीर्णतृणासनमासीनो मेवाडनरेशो दीर्घमुष्णं च निश्वस्य समागतान् स्वसहायानवलोक्य सखेदमुवाच. मित्रवर्याः! अद्य खलु

यूयं मया कर्तव्यनिश्चयार्थमेवाहूतास्तद्यथा भवद्भ्यो रोचते तथैव भीतिं विहाय वदत. सम्प्रति वयं सर्वे समसुखदु:खा: केवलं शरीरैरेव विभिन्नाः. अधुना नाहं राजा नापि यूयं मदीयाः प्रजाः केवलं भवद्भिरादृतो राजस्थानस्वातंत्र्यार्थं प्रयतमानः पुरोगोऽस्मि. अस्तु. साम्प्रतं प्रचलितस्य युद्धस्य किं वा फलं स्यादिति कथयितुं कोऽपि शक्नुयात्. प्रकृष्टबलेन दिल्लीपातिना समं वयं हीनबलाः कथं योत्स्यामहे. प्रतिदिनं च तस्य बलं वर्धतेऽस्माकंबलं क्षीयते. तदत्रावसरे किं करणीयं ?

अथ च सततं युध्यमाना यद्यपि वयं राजस्थानं स्वाधीनं करिष्यामस्तथापि लाभः कः ? समग्रभारतवर्षात् खलु यवनानामुद्वासनमशक्यं. तद्ये च जना ऐहिकविषयभोगलोभलुब्धाः यवनैः समं संबंधं करिष्यन्ति कुर्वन्ति च ते मदीयान् प्रजाजनांश्च द्रव्यैर्लोभयन्तोऽवश्यं दूषयेयुः. तस्मात् अहमिदं यवनदूषितं राजस्थानं त्यक्त्वाऽन्यत्र गत्वा नूतनमेव राज्यं कल्पयिष्यामि. तत्र च निवसन्तः सर्वे वयं शुद्धबीजाः शुद्धानेव क्षत्रियानुत्पादयन्तः पुनरपि पश्चाद्भारतवर्षं जेष्यामः भारतवर्षजयो भवतु मा वा तथापि शुद्धं क्षत्रियबीजं तु तिष्ठेत्. यद्यप्यहमपि यूयमिव मातृभूमिं त्यक्तुं दुःखी भवामि तथाप्यत्र नान्या गतिः. मातृभूमौ प्रीतिरधिकोत स्ववंशपावित्र्य इति परीक्षासमयः प्राप्तः. तद्यदनुमतं भवतां तद्वदतेति. श्रुत्वा च प्रतापसिंहस्येदं मातृभूमित्यागफलकं भाषणं सर्वेऽपि ते वनेचराः क्षत्रियाश्च साश्रुलोचनाः किमप्यवदन्तस्तूष्णीं तस्थुः.

अथ तेषां सर्वेषां मध्ये मान्यो वृद्धः क्षत्रिय आसीत् स च मुकुलितहस्तोऽवदत्—स्वामिन् ! केवलं द्वित्रदिनसंगतिरपि

वियोगकाले दुःखायते. किमुत वंशपरंपरया सेविता मातृभूमिः. बालोऽपि सकलदोषमयीमपि स्वजननीमेव वांच्छति न पुनः सकलगुणालंकृतां परां नारीं. स्नेहो हि न बाह्यानुपाधीनाश्रयते किंतु अचिन्त्यान् प्राक्तनान् भावान्. नाथ ! स्वकुलस्य पावित्र्यरक्षणार्थं नास्ति देशान्तरवासस्यावश्यकता. अधुनाऽत्रैव निवसता त्वया स्वकुलपावित्र्यमद्यावधि रक्षितं न वा ! एवमेवाग्रेऽपि रक्षिष्यसि. ये च महाभागा आत्मानं कलंकयितुं नेच्छेयुरवश्यमेव ते त्वदीयां सरणिमनुसरेयुः ये च मानसिंहसदृशा लोभाकुलाः पापिनस्तेषां पावित्र्यं रक्षितुं शक्तोऽपि यदा न प्रभवेत्तदा को भवान्. किं संप्रत्यपि ते स्वकन्या यवनेभ्यः समर्प्य संपादितान् भोगान् न भुञ्जते ! परदेशवासिनोऽपि ते दुष्टा लुब्धाः प्रजाजना अवश्यमेव पापमाचरिष्यन्ति. तत् कुलपावित्र्यरक्षणार्थं नास्ति देशान्तरवासस्यावश्यकता. प्रत्युतात्रैव स्थित्वा पावित्र्यं रक्षन् कदाचिदपि संजातोपतापांस्तान् मानसिंहप्रभृतिक्षत्रियाधमान् पावयितुमपि यावत् शक्नोषि. परन्तु राजस्थानविजयः कथं भवेदिति महती चिन्ता. समस्तभारतवर्षात् सम्पदं संपाद्य दिल्लीश्वरो युध्यते वयं तु कथंचिज्जीवन्तो युध्यामहे. अस्तु. अहमिच्छामि—साम्प्रतमुदयसमयो यवनानां तदधुना देशान्तरं गत्वा तत्र सुखेन निवसन्तः प्रभूतं धनं संपाद्य पश्चादागत्यैनं जित्वा पुनरपि स्वमातृभूमिमुद्धरिष्याम इति.

सर्वे जनास्तयोर्भाषणं निशम्य खिन्ना अपि मातृभूमित्यागेऽनुत्सुका अपि अगतिकाः किमप्यवदन्तस्तूष्णीं तस्थुः.

परेद्युः प्रतापसिंहं देशान्तरगमनान्निवर्तयितुमिवोदयाचलमारूढे भगवति सवितरि श्रीमेवाडपार्थिववियोगदुःखादिव तूष्णीं-

भूतेषु पक्षिगणेषु स प्रतापसिंहो मातृभूमिवियोगदुःखेनातिव्याकुलः कथमप्युत्थाय स्नात्वा महता धैर्येणापासनां विधाय स्वहृद्यानप्यबोधयत्. महाराज्ञी तु संजाताधिकशोकाप्यगतिका पतिव्रता सर्वं गृहकृत्यं विधाय विमनस्का तस्थौ.

अचिरादेव ते सर्वेऽपि महाराजप्रतापसिंहानुयायिनः क्षत्रिया वनेचराश्च स्वस्वसंबंधिभिः समं तत्रागच्छन्. तान् सर्वानपि गृहीत्वा महाराजः प्रतापसिंहः प्रवस्तुमिच्छुस्तत्रत्यानन्यानपि वृद्धान् जनानभ्यवन्दत. ते च वृद्धा अपि सरलमतयस्तं प्रवसन्तं वीक्ष्यातिशोकाकुला बालवदरुदन्. कथमपि तदनुज्ञां गृहीत्वा क्रमेण संचरन् स्वमातृभूमेश्चरमदर्शनार्थं सर्वैः समं प्रतापसिंहः शैलराजस्योन्नतं शिखरमारुरोह. तत्र स्थित्वा सकलैश्वर्यसंपन्नां मातृभूमिं वीक्ष्य शोकाकुलः स व्यलपत्—हेवन्दनीये ! सकलसुखदायिनि ! उपास्यदेवते ! मातृभूमे ! एष पापी त्वयि निवसितुमयोग्यः पौरुषहीनः प्रतापसिंहस्त्वां शत्रुहस्ते निक्षिप्यान्यत्र गन्तुमिच्छति. मातः ! यद्यपि नाम वत्सः कियानपि पापी भवतु परन्तु मातृस्नेहो न्यूनो न भवति. जननि ! त्वमेव सत्या जननी न पुनर्जन्मदायिनी. जन्मदायिनी माता तु केवलमुपलक्षणं. यतस्त्वमेव निष्कामा सर्वानपि नः पूर्वजानपालयथाः. अम्ब! देशान्तरवासिनो मे देहस्य कुतस्ते सौख्याकरः स्पर्शः, कुतश्च प्रेममयो मन्दमन्दवाही श्वास इव क्लेशहरः पवनः, कुतः खलु इमा नयनाल्हादका वनराजयः. कुतो बतामृततुल्यजलप्रवाहा निर्झराः, फलभारावनम्रा भूरुहाः. धन्यासि जननि ! याऽस्मान् सम्यक् ररक्षिथ. वयमेव नीचास्त्वदवने सालसा अशक्तास्त्वां रिपुणा बलात्कारेणाक्रान्तां मुक्त्वाऽन्यत्र गच्छामः. मातः ! इदं ते मुकुटमिव

दूरात्दृश्यमानं चितोडदुर्गं मां प्रवासान्निर्वर्तयितुमिच्छतीव. एता हरिणांगनाः सवत्समितस्ततो धावन्त्यो यवनाक्रान्ताः क्षत्रियांगना इवाश्रयार्थं संचरन्ति. एष च मे दक्षिणो बाहुः प्रस्फुरन्किमपि शुभं सूचयति. दैवहतकस्य प्रतापसिंहस्याधुना किंवा शुभं ! एष शैलराजोऽपि मां प्रवसमानमवलोक्य निर्झरोदकत्यागमिषेण प्रभूतमश्रुजलं मुञ्चतीव. एतां हरितशाद्वलवस्त्राच्छादितां अनेकदुर्गवररक्षितां मातृभूमिं क्रूरयवनसात्कृत्वाऽन्यत्र गन्तुं मे पादावपि न प्रचरतः, वियोगदुःखसंभूतजलमलिने नयने अपि द्रष्टुं न पारयतः. गद्गदस्खलिता वागपि न प्रसरति तथापि प्रवासादन्यत्कारणमेव स्वातंत्र्यरक्षणे न पश्यामि. तद्यथा भवतु. पवित्रैर्मदीयैः पूर्वजैः सुरक्षितां मातृभूमिं चरमेण साष्टांगप्रणिपातेन संभावयामीत्युक्त्वा सर्वैः समं सादरं साष्टांगं प्रणिपपात.

---

## ( २ )

तदानीमेव कृतप्रवेशोऽतिवार्धक्यपीडितकायः शुक्लतरविरलकेशमाण्डिताशिरा यष्टिसालंकृतहस्तो वक्रतरमध्योऽपि तेजस्वी भामसानामको वृद्धः प्रधानामात्यस्तस्य चरणकमले स्वहस्ताभ्यां जग्राह. प्रतापसिंहश्च मातृभूमिवियोगाकुलमनाः किंचिदपि क्षणमात्रमचेष्टमानः प्रकृतिमापन्न उत्थाय तं मौलममात्यमपश्यत्. अपृच्छच्चागमनकारणं. स तु वृद्धः कुशाग्रमतिर्मुकलितहस्तः प्रतापसिंहमवदत्—स्वामिन्!—अहं हि साम्प्रतं स्वामिकार्येनियुक्तपुत्रद्वयः सुखेन वार्धक्योचितां वेदान्तचर्चां कुर्वन् भगवन्तमुपासमानः कालं यापयामि. तौ च मम पुत्रौ मदीयदुर्दैवेनाकालएव युध्यमानस्य स्वामिनः कृते स्वर्गमगच्छताम्. संजातपुत्रदुःखवै-

राग्य: क्षणिकं सर्वं भावयंस्त्यक्त्वा सर्वं गृहादिकमेकाकी परमरमणीयायामरवलिपर्वतगुहायां तीव्रं तपश्चरामि. अतीते दिनेऽहं यथानियमं तपश्चरित्वा प्रवाते स्थाने किमपि किमपि विचारयन् स्थित: सशोकयो: कयोश्चिद्वनेचरयोर्भाषणमश्रृण्वम्. तयोरन्यतर: शोकाकुलोऽपरं वनेचरमवदत्—अहं हि प्रवसता महाराजेन समं गमिष्याम्येव. परन्तु महाराजोऽसहायोऽकृतकृत्य इमां मेवाडमेदिनीं परित्यज्य व्रजतीति दु:खास्पदम्. मयाऽप्यत्रावस्थाय किं कर्तव्यम्. इत्यादिकं. अहं तु संजातजिज्ञास: क्रमेण सर्वं वृत्तं ताभ्यामवगम्य दु:खातुरो द्रव्याभावात् स्वदेशं त्यजन्तं स्वामिनं निशम्य प्रभूतं द्रव्यं दातुमागत:. स्वामिन्? त्वदीयं कुलं सेवमानैरस्मदीयैर्वंशजै: संपादितो महान् द्रव्यराशिरस्ति. तं स्वीकृत्य पुनरपि स्वमातृभूमिं मोचयतु स्वामीति.

महाराज: प्रतापसिंहश्च तमकस्मादागतं मौलममात्यं वीक्ष्य विस्मित: स्वदैवमनुकूलमिवामन्यत. ततश्च तं वृद्धमाह—अमात्यश्रेष्ठ? भवद्भिर्यत्कथितं तत्सर्वं सत्यं परन्तु भवत्कुलजैर्यथान्यायं राजसेवां विधाय संपादितो धनराशिर्भवतामेव, न तत्र राज्ञो मेऽधिकार: अहं च न ब्राह्मणो यद्दानरूपेण तं ग्रहिष्यामि तत् सन्नपि ते द्रव्यसंग्रहोऽसत्सम एव मम साहाय्य इति. तदिदं भाषणं निशम्य सानन्द: स वृद्ध आह—स्वामिन्! पवित्रसूर्यवंशजातस्योचितैव ते परद्रव्यानिस्पृहता. नाथ! अस्मिन् कलियुगे राजानश्च प्रजाभक्षा एव. एते यवनराजा: प्रजाद्रव्यकान्तासु लोलुपा दूषयन्ति राजशब्दम्. अस्तु. यदिदमस्मत्पूर्वजैर्द्रव्यं संपादितं तदपि राजस्थानमेदिन्या: सकाशादेव. सा चास्माकं जननी यदि शत्रु-

णा समाक्रान्ता तदा तन्मोचनाय तयैव दत्तं द्रव्यं न वितीर्यते तदा कृतघ्नतादोषः स्यात्.

किंच—भुक्तशेषस्य द्रव्यस्य कस्मिन्नपि साधुकर्मणि विनियोगः कर्तव्य इति सज्जनानां रीतिः. अहं तु पश्यामि मातृभूमेः स्वातंत्र्यरक्षणान्नान्यत् पुण्यं कर्म. मातृभूमेः स्वातंत्र्ये सर्वाः प्रजा न्यायेन वर्तिष्यन्ते. त्वादृशा धर्मपरायणा राजानो यां भूमिं परिपालयन्ति तत्राधर्मस्यावकाश एव न. तद्राजन्? केवलं राजस्थानस्वातंत्र्यरक्षणार्थे प्रयतमानं त्वां यदि मदीयेन द्रव्येण साहाय्यं भवेत्तदाऽहमपि त्वमिव प्रभूतं सुकृतं लप्स्ये.

अपिच—ये खलु ब्राह्मणानां दानग्रहणाधिकारं मन्यन्ते शास्त्रकारास्तत्रापि कारणं तेषां विद्याप्रसारादिभिर्लोकोपयोगित्वमेव. पुरा हि ब्राह्मणाः सर्वत्र विद्यां वर्धयन्तो जीवनार्थमेव परिग्रहमकार्षुः. तद्यथा विद्याप्रसारः श्रेयांस्तथैव स्वमातृभूमिस्वातंत्र्यरक्षणमपि. प्रत्युत रक्षिते हि स्वातंत्र्ये विद्याप्रसारोऽधिकं जायते.

वस्तुतस्तु—राजन्, सर्वे वयं मातृभूमेः सेवका एव. यथा हि गृहे न्यूनाधिकबुद्धिमन्तः स्वाधिकारतारतम्येन वृद्धां मातरं सेवन्ते तनयास्तथैव वयमपि सेवामहे. सेव्यसेवकभावस्तु केवलं शासनसौकार्यार्थं निर्मित एवेति तत्त्वं. तत्त्वं मदीयद्रव्यग्रहणे घृणां मा कुरु इति.

महाराजः प्रतापसिंहः पितामहस्येव वृद्धस्य मौलस्यामात्यस्य सोपपत्तिकं वचनं निशम्य शान्तः सर्वानपि स्वसहायान् कर्तव्यमपृच्छत्. तेऽपि वृद्धामात्यस्य विज्ञप्तिमेवान्वसरन्. ततश्च महा-

राज्ञः स्वयं तत्स्थानं गत्वा सर्वं द्रव्यनिधिमात्मसादकरोत्. स चाद्वादशवर्षं पंचविंशतिसहस्रसैनिकव्ययसमर्थ आसीत्.

( ३ )

महाराजप्रतापसिंहोऽकस्मात्प्राप्तमिमं महानिधिं प्रीतया मातृभूम्येव प्रदत्तं मन्वानः पुनरपि स्वस्थानमागत्य सर्वान् वनेचरानेकत्रीकृत्य नूतनां सेनामपि विरचयामास. धूतकार्पण्यः स पुनरपि ग्रीष्मरविरिवात्यन्तं दुर्दर्शो बभूव.

यवनसेनापतयस्तु सर्वतः संचरतां चाराणां मुखेभ्यः श्रीमेवाडनरेशमन्यत्र गन्तुं प्रवृत्तं निशम्य संजातानन्दाः सेनानिवेशे वारांगनानृत्यं पश्यन्तो यथेच्छं मद्यं पिबन्त आनन्दमग्ना आसन्. ते च स्वकीयपराक्रमैः पराजितं भीतं पलायमानं प्रतापसिंहममन्यन्त. दिल्लीपतिरपि अकबर आत्मानमरिहीनं मन्यमानः परममोदत. सर्वे राज्यस्थानवासिनो दिल्लीनगरवासिनो रजपूतक्षत्रिया अत्यन्तं खिन्ना अभवन्. मानसिंहसदृशास्तु निभृतमहृष्यन्.

एवंगतेषु केषुचिद्दिवसेषु महाराज प्रतापसिंहः स्वसैनिकान्नूतनैः शस्त्रैरश्वैश्च सुयोधान्विधाय युद्धवेलां प्रतिपालयामास. अचिरादेव दिल्लीश्वरस्य शहाबाजनामा कश्चन सामन्तः ससैन्यं प्रतापसिंहविजयार्थं दिल्लीश्वरेण प्रेषितोऽरवलिपर्वतोपत्यकायां सेनां निवेश्य स्थितश्चारैर्महाराजाय निवेदितः. प्रतापसिंहश्च तस्यामेव रात्रौ निभृतं सर्वैः स्वीयैः सैनिकैः सममाचक्राम तं सेनानिवेशं. यवनसैनिकाश्च निद्राधीना यामिकैः प्रतापसिंहागमनं निबोधिता अपि मिथ्या मन्यमानाः क्षणादेव यमालयमगच्छन्. तच्च यवनसैन्यमतिप्रबलैः कोपातिरेककलुषैः क्षत्रियसैनिकैर्व्याघ्रैराक्रान्तं हरिणी-

यूथमिव भीतिग्रस्तमव्यवस्थितमभवत्. तस्मिन्दिने महाराजस्य हृदये दयालवोऽपि नावशिष्टः. स च प्रलयकाल इव कृतान्त इवानेकान् यवनसैनिकान् निहन्यमानः प्रेतमयीं धरित्रीं विदधद्यवनशोणितै-रात्मक्रोधं शमयामास. यवनाक्रमणतप्तां स्वमातृभूमिं कदुष्णैः प्रभूतैस्तदीयरुधिरजलसेकैरभ्यषिंचत्. तस्मिन्नाक्रमणे कमप्येकं यवनं स नामुंचत्.

अचिरादेव यावदिमां वार्तां निशम्य दिल्लीश्वरो महतीं स्वसेनां प्रेषयति तावन्महता जवेन कुमळनेरदुर्गमाक्रम्य रुरोध. अना-यासेनान्तःस्थैः क्षत्रियैराहूतः स महाराजो रात्रौ दुर्गं प्रविश्य अबदुल्लानामानं दुर्गाधिपतिं तथा तदीयांश्च सैनिकानवधीत्. सर्वे च राजस्थानवासिनः क्षत्रियाः क्रमेण विजयमानं तं मेवाडाधिपम-वलोक्य सानन्दं महतोत्साहेन तस्य सैनिका अभवन्. तेन वर्ध-माना सा मेवाडनरेशचमूरायासं विना सर्वाण्यपि यवनैर्जितानि दुर्गाण्यात्मसादकरोत्.

वाचकाः ! यो हि खलु महाराजः प्रतापसिंहो दुर्दैवव्याप्तो विफलीभूतसर्वप्रयत्नो निराशो नाम भूत्वा देशान्तरे वस्तुमैच्छत् स एवामासं प्रयतमानः सर्वाण्यपि दुर्गाणि तथा समग्रां मेवाड-मेदिनीं पुनरपि लेभे. दिल्लीश्वरश्च यं प्रदेशं जेतुमगणितसेनया समं चिरं प्रायतत स एव प्रदेशः केवलं कतिपयैरेव दिवसैः प्रता-पसिंहः पुनरप्यात्मसादकरोत्. एतेन दैवं चेदनुकूलं तदाऽनायासे-नाविलंबेनार्थाः सिध्यन्तीति सिद्धं. परन्तु यो हि केवलं दैववादी स कदापि यशस्वी न भवति. यतो दैवमनुकूलं वा प्रातिकूलं वा वेत्तुं पुरुषप्रयत्नोऽप्यपेक्ष्यते. तं विना दैवस्य स्वरूपमेव न ज्ञायते. यथा प्रदीपप्रकाशं विना घटोऽपि न ज्ञायते नापि तदीयं रूपं.

तथैव प्रयत्नं विना दैवमपि सानुकूलं प्रतिकूलं वेति न ज्ञायते. तस्मान्मानवेन सततं प्रयत्नशालिना भवितव्यम्. दैवं चेदनुकूलं तदा फलं जायतेऽन्यथा प्रयत्नो निष्फलो भवति. इममेव सिद्धान्तं सर्वाणि शास्त्राणि वदन्ति. अस्तु.

एवं प्रयासं विना लीलया कृत्स्नामपि मेवाडमेदिनीं पुनरपि स्ववशां विधाय महाराजो मेवाडमेदिनीपतिः पुनरपि सूर्यचिन्हांकितेन ध्वजेन मेवाडमेदिनीं भूषयामास. साऽपि च सौभाग्यतिलकेन नारीव वनवासादागतेन रामेणाऽयोध्येवातिसौभाग्यं पुपोष.

---

## ( ४ )

अथ महाराजेन पराजितास्ते यवना दिल्लीनगरं गत्वा सर्वं वृत्तं स्वस्वामिनेऽकबराय न्यवेदयन्. सोऽपि श्रुत्वाऽमुं वृत्तान्तं क्रुद्धोऽपि अतिविस्तृतं स्वराज्यं पालयितुमशक्तोऽनेकैरान्तरैर्बाह्यैश्च शत्रुभिः परिपीडितो व्यचिन्तयत् अयं हि महाराजो नाम मेवाडदेशे ललामभूतः तं हि ममाऽपि सामन्ताः क्षत्रिया निभृतं साहाय्ययन्ति. यद्यपि मया कैश्चित्क्षत्रियैः समं शरीरसंबन्धः कृतस्तथाऽपि प्राय एतमेव संबंधं निमित्तीकृत्य ते लोकैरपमानिताः. ये केचन क्षत्रिया यवनैः समं संबन्धमकुर्वंस्तेऽपि लोभग्रस्ता लोभपरिशमायैव तथाऽचेष्टन्त. मया चैश्वर्यबलेन कारिता अपि तादृशाः संबन्धा न लोकप्रिया भविष्यंति. यावत्कालमहं वा मदीया वंशजा वा बलाढ्यास्तावत्कालमेवैतत्सर्वं प्रचलेत्. नष्टे च यवनसाम्राज्ये पुनरपि इम एव क्षत्रियाः केनाप्युपायेन तमेव निर्मलं मेवाडाधिपवंशं मानयन्तः पुनरपि यवनाद्विषो भविष्यन्ति. प्रतापसिंहश्च प्राणात्ययेऽपि मम सामन्तो न भविष्यति. यद्यपि अयं पराजयो

मम कीर्तेः कलंक एव तथापि अन्ये बहवः शत्रवोऽधुना समुत्पन्नाः. तान्विहाय प्रतापसिंहशासनेन न कोऽपि लाभः. तत्प्रथमतोऽन्यान्महतः शत्रुन्विनाशयित्वा पश्चात्प्रतापसिंहमपि शास्यामीति-इत्थं चिन्तयित्वा स मेवाडदेशे पुनरपि सेनाप्रेषणे मन्दादरो बभूव.

मेवाडाधिपः प्रतापसिंहः कुमळनेरदुर्गमुषित्वा पुनरपि पूर्ववत्सर्वं राज्यं प्रशशास. स्थाने स्थाने यवनसैन्यैर्विनाशितानि दुर्गाणि पुनरपि संचस्कार. निर्जनान् देशान् पुनरपि सुप्रजान् कृषीवलमयांश्चक्रे.

अथ पराजितायाः सेनायाः साहाय्यार्थमन्यां सेनां तथा सेनापतिं न प्रेषयति यवनराज इत्यवलोक्य साश्चर्यः प्रतापसिंहः क्रमेण कुमळनेरदुर्गादग्रे प्रसरन् मार्गेऽनतिकठिनमपि न प्रतिबन्धमलभत. केवलमुदयपुरस्य रक्षणार्थं मार्गे ये सैनिकनिवेशा यवनसेनापतिभिर्विरचिता आसंस्तेषु निवसन्तो यवनसैनिका महाराजप्रतापसिंहमुदयपुरं विजेतुमागच्छन्तं निशम्य पलायिता अदृश्या अभवन्. महाराजश्च स्वमार्गं निष्कण्टकमवगम्य कुमळनेरदुर्गान्निर्गतः स्थाने स्थाने दीनाभिः प्रजाभिः साश्रुनयनाभिः सानन्दं सत्कृतः क्रमेणागत्योदयपुरं प्रविवेश. प्राशोभत च तदेवोदयपुरं पूर्ववत् क्षत्रियराजचिन्हमण्डितं अनेकनागरिकजनसंकुलं संचरदनेकसैनिकं नूतनमिव संजातं.

महाराजश्चोदयपुरमधिवसानो यवनैराक्रान्तं सर्वमपि भूप्रदेशं पुनरपि स्वसेनापतिं प्रेषयित्वा स्वाधीनमकरोत्. केवलं चितोडदुर्गमेव तदधीनं नाभवत्. प्रतापसिंहश्च पैतृकं सिंहासनं प्राप्य स्वस्थचित्तः सर्वानपि स्वसामन्तान् पुनरप्याहूय सत्कारयांचक्रे. तेऽपि वनवासादागतं नूतनमिव संप्राप्तं महाराजं मन्वाना

महताऽऽनन्देन महोत्सवं चक्रुः. महाराजप्रतापसिंहस्य पराक्रम-वर्णनमयानि अनेकानि गीतानि नूतनान्येव विरचय्य बन्दिजनाः सर्वत्रागायन्. अन्तःपुरवास्यपि रजपूतरमणीगणो महता प्रेम्णा राजस्थानस्वातंत्र्यरक्षकस्य महाराजप्रतापसिंहस्य यवनबलात्कार-निराकरणेनेव कृतज्ञो मधुरैः कण्ठैर्महाराजयशस्तोममगायत्. सकलराजस्थानवासिनो बन्दिजनाः कुशाग्रमतयो नूतनानि प्रति-भाप्रसादमयानि महाराजपराक्रमाणां काव्यानि निर्माय दिल्ली-नगरेऽपि जगुः. दिल्लीश्वरामात्यप्रभृतयो यवनाअपि तानि काव्यानि श्रुत्वा साश्चर्या महाराजमभिननन्दुः.





# १४ स्वर्गवासः

१ चिन्तोद्भवः
२ पुत्रवर्तनम्.
३ चितोडविजयाय शपथग्रहः
४ स्वर्गगमनम्

## ( १ )



एवमुदयपुरवासिनं महाराजं मेवाडाधिपतिं प्रतापसिंहं ज्ञात्वाऽपि दिल्लीश्वर इतरकार्य-व्यग्रमना वा प्रतापसिंहं विजेयममन्वानो वा न तत्र सेनां प्रैषयत्. महाराजश्च यद्यपि लोकदृष्ट्या कृतकृत्य इवासीत्तथापि स मनसाऽत्यन्तमुद्विग्न एवाभवत्. अद्यापि स पूर्ववत्तृणमय-आसन एव सुष्वाप, पर्णावल्यामेवाभुंक्त. न कदापि स्वकेशान् संचस्कार. केवलं तपस्वीव वर्तमानः सदा प्रजापालनमकरोत्. एकदा महति प्रत्यूषेऽतिविरलचन्द्रकिरणभासुरे, नश्यत्तमःपटल-मनोहरे, ईषद्विकचकमलकोरकसुरभिगन्धव्याप्ते, प्रबुद्धपक्षिगण-वाचालवृक्षसमूहे अनुरक्तनायिकाया इवारुणसंध्यारागमनोहरे प्राग्दिशो मुखे, चन्द्रविरहादिव क्रमेण नश्यति तारागणे, उदंय-

सागरतडागतरंगसंगशीतले मन्दमन्दवाहिनि प्रातःसमीरे, भगवद्भक्तारब्धगीते श्रोत्रसुखदायिनि, पलायमाने चौरजारादिनीचमानवगणे, निष्प्रभे दीपसमूहे, यथानियमं महातडागस्य परितः स्थले पर्यटनार्थं गतः शान्तचित्तः स्मृतसकलपूर्ववृत्तो विचारशाली राजा मेवाडाधिपतिः प्रतापसिंहः सहकारतरुवरमण्डिते बकुलवीथिकानिर्गलितकुसुमस्रस्तरे कोमलपल्लवविरचितनूतनासंख्यासने निर्मनुष्ये स्थले समुपविष्टः स्वयमेकाकी किमपि किमपि विचारयामास. सोऽचिन्तयत्—यद्यपि मया खलु परमपवित्रे सिसोदियावंशे समुत्पन्नेन दिल्लीश्वरः पराजितस्तथापि नेदं बहु अभिमानास्पदं. यत्खलु मम पैतृकं राज्यं तदेव परिपालयामि. तदर्थमेव च मयाऽसंख्याः क्षत्रिया निहताः. एषा समग्रा राजस्थानभूमिरेतावत एव राज्यस्य पालनार्थमनेकवीररक्तधाराभिः सिक्ता. अद्यापि च सकलमेवाडमेदिनीमुकुटमिव मान्यं चितोडदुर्गं यवनाधीनमेव. धन्याश्च मम पूर्वजा ये यवनराजान्निहत्य तदीयमपि राज्यमाक्रामन्. यथा च निर्बुद्धो धनाढ्यपुत्रः पैतृकं धनं वर्धयितुमसमर्थः संचितरक्षणेनैवात्मानं कृतकृत्यं मन्यते तथैवाहमपि मन्ये. धिङ्मां! यो हि बाप्पारावळो नूतनं राज्यं संपाद्य तत्तथाऽवर्धयत यथाऽधुनिकानि सर्वाण्यपि यवनराज्यानि तत्रैवान्तरभवन्. सोऽहं जीवन्नेव सकलमान्यवरमदीयपूर्वजाभिषेकपूतं चितोडदुर्गमपि यवनेभ्य आत्मसात्कर्तुं न पारयामि ! यत्र च चितोडदुर्गे यवनबलात्कारभीत्या द्विसहस्रसंख्याका रजपूतक्षत्रियललनाः सुखेन प्रचण्डे ज्वालाजटिले भगवति वैश्वानरेऽशेरत, अगणिता लक्ष्मणसिंहप्रभृतयः पुण्यश्लोका मदीयाः पूर्वजास्तथा मदीया देशबान्धवास्तृणवत् प्राणान्विससर्जुः. यत्र

चाल्लाउद्धीनयवनेन बलाद्याचिता त्रैलोक्यसुन्दरी राजस्थानलक्ष्मीरिव मूर्तिमती पद्मिनी समं बह्वीभिः क्षत्रियांगनाभिः स्वर्गमगमत् न तु जीवनेच्छया यवनदासी बभूव, यत्र च पन्नादेवी स्वपुत्रं रिपुखड्गबलिं विधाय राजपुत्रं मदीयं पितरमपालयत्तस्मिन्नेवालौकिकेतिहाससाक्षिणि राजस्थानप्रतापविजयस्तंभे चितोडदुर्गे यवनाधीने सति मया किं कृतं ? एते हि बन्दिनो मदीयां कीर्तिं गायन्ति परन्तु चितोडवियोगदुःखेन प्रव्यथितं मे हृदयं न ते जानन्ति. एते चैतावतैव कृतकृत्याः सुखनिमग्ना भविष्यन्ति. अयंच दिल्लीपतिरनेकान्तःशत्रुव्याकुलः संप्रति राजस्थाने मनोदातुमसमर्थ उदास्ते. यदा हि अयं सर्वानन्तःशत्रून्निहत्य स्वस्थो भविष्यति तदा पुनरपीमां राजस्थानमेदिनीं जेष्यत्येव. इयं हि सर्पसमा यवनजातिः कदापि द्वेषं न मुञ्चति. अहं च यावज्जीवामि तावत्स्वातंत्र्यं तथा पवित्रसिंदोदियाकुलपावित्र्यं दिल्लीश्वराय न दास्यामि. अहं च यथा स्वातंत्र्येणाजीवम् तथा मम पश्चात्तना मदीया वंशजा वर्तिष्यन्ते न वा ! याश्चाद्यापि चितोडदुर्गविजयादिनामाशा अतृप्ताः सन्ति ताः परिपूरयिष्यन्ति न वा ! मदीया वंशजा ऐहिकविषयोपभोगमग्ना दिल्लीश्वरं शरणीकृत्य तत्कृपया क्षुद्राः कीटा इव जीवन्तस्तस्य राजसभां गत्वा तं वन्दमाना अन्यैः प्रजाजनैः ' एते महाराजप्रतापसिंहस्य वंशजा ' इति साभिप्रायं दर्शिता लज्जाधोवदना मदीयां स्वातंत्र्यप्रियतां तथाऽनवरतक्लेशसहस्रसंपादितां विमलां कीर्तिं दूषयिष्यंति ? कः खलूपायोऽस्य प्रतीकारे. केवलमीश्वरेच्छैवेति तूष्णींभवितुं नाहमलं. यावच्छक्ति मानवेन स्वसाध्यसिद्धये प्रयतनीयं तावता यदि न सिद्ध्येत्तदाऽन्ते परमात्मेच्छैव शरणं. अद्यापि मदीयं व्रतं मया पालितमेव. अग्रे च

नाहं किमपि समीचीनं मदीयव्रतस्य पालयितारं पश्यामि इति. एवं भूयो भूयो विचारयतः क्षीणशक्तेः कायिकमानसिकक्लेशजर्जरितकलेवरस्य महाराजप्रतापसिंहस्य शरीरेऽस्वास्थ्यमभवत्. स च निसर्गत एव परमदृढशरीर आयस इव कठिनः कदापि सम्पूर्णे जीवने रोगच्छायामपि न पस्पर्श. महाराजः प्रकृत्यैव धीरः शरीरास्वास्थ्यं जानन्नपि न बहिर्दर्शयामास. तथैव महतोत्साहेन स राज्यकार्याणि चक्रे. तदानीं च राज्यकार्यमपि अतिकठिनमासीत्. यवनानां भयंकरैराक्रमणैः कृत्स्नापि राजस्थानभूमिस्तस्करलुण्ठिताभरणाया युवत्याः सादृश्यमभजत सर्वे प्रजाजनाश्च यवनाक्रमणभीताः पलाय्यान्यत्र स्थिताः. तांश्च महतादरेणाहूय निवासार्थं प्रतापसिंह आदिशत्. तेऽपि वंशपरंपरया प्रजाजना मेवाडमेदिनीनिवासिनः सर्वे प्रतापसिंहाज्ञां शिरसा स्वीकृत्य तत्रागत्यावसन् महाराजोऽपि तेभ्यः परं सुखं ददौ.

---

## ( २ )

एवं महाराजे स्वशरीरास्वास्थमविभाव्य राजस्थानस्वास्थ्यं वर्धयति सति पुनरपि तस्य चिन्ता प्रबलाऽभूत्. तत्र कारणमिदं.

यदा च महाराजः प्रतापसिंहो मेवाडमेदिनीसिंहासनमारुरोह तदैव स यावदहं चितोडदुर्गं यवनेभ्यो न मोचयिष्यामि तावत्पर्णकुटीष्वेव वत्स्यामि न राजप्रासादे, पर्णावल्यां भोक्ष्ये न पुनः सुवर्णपात्रे, तृणशय्यायां शेष्ये न पुनस्तूलमये मृदुले शयन, इति शपथं चक्रे. स च तं शपथं पूर्ववत् सम्प्राप्तेऽपि राज्येऽपालयत्. अधुनाऽपि स स्वकुटुंबेन समं पूर्ववदुदयसागरतडागस्य तीरे निबद्धासु पर्णकुटीष्वेवावसत्. ताश्च कुट्यो यथा वनवा-

सेऽप्यासंस्तथैवात्रापि. तदेतत्तस्य ज्येष्ठपुत्राय उमरावनाम्ने नारोचत. स हि मेने यदाऽस्माकं राज्यमेव नासीत्तदा वनेचरवदस्माभिरपि पर्णकुटीषु चिरादुषितं, परन्तु सम्प्राप्तेऽपि मेवाडराज्ये पुनरपि दीनवत् पर्णकुटीषु निवास किमर्थं. चितोडदुर्गविजयस्तु भविष्यति. यदा हि पितामहा अत्रावर्तन्त तदाऽपि चितोडदुर्गं यवनैराक्रान्त मेवासीत् यथा हि पितामहा अत्र राजप्रासादेष्ववर्तत तथैव वय मपि वत्स्याम इति. महाराजः प्रतापसिंहस्तदीयं मनोरथं सम्यग-जानात् परन्तु समये समये तस्मै कर्तव्यमबोधयत्.

एकदा युवराजो मृगयार्थं गतो नानाविधान् क्रूरान् पशून्नि-हत्य मध्यान्हे स्वावासं गन्तुं न्यवर्तत. स च तीव्रैर्मध्यान्हसूर्यकि-रणैः संतप्तमस्तकः कथमपि स्वनिवासमाययौ. तत्र समागत्य स्व-कुटीं प्रविशतो बहिर्निर्गतवंशाघातेन तस्योष्णीषं मस्तकादध्रः-पपात. प्रथमत एव संतप्तः स युवराजस्तस्योष्णीषस्य पतनेन सं-जातोद्वेगः पितुः समीपं गत्वा कुटीर्निष्कास्य नूतनान्प्रासादा-न्विरचयितुं विज्ञापयामास.

महाराजः प्रतापसिंहस्तं क्रुद्धं युवराजं शनैः सान्त्वयन्नुवाच. वत्स ! नाहमेतावान् कृपणो यद्धनलोभेन प्रासादान् न विरच-यामि. नाहं न जानामि यत्कुटीषु निवसतां वो महान् क्लेशो भवतीति. परन्तु यदर्थमस्माभिः शपथः कृतस्तत्कार्यं चितोडा-क्रमणं न संवृत्तं. युवराज ! अद्यापि त्वमसि बालः नास्ति ते सांसारिकोऽनुभवः यथा हि सर्वे जना मन्यन्ते ' राज्यं नाम महासुखदायि ' तथा नास्ति. राज्यपालनं हि दुष्करं कर्म. राजा-पेक्षया प्रजा एवाधिक्येन सुखभाजो भवन्ति. केवलं यथेच्छ-विषयभोगेन वा जनानां प्रणतिस्वीकारेण वा न राजत्वं लभ्यते

किंतु प्रजानां पुत्रवत्परिपालनात्. प्रजानां पुत्रवत्परिपालनं राज्ञः कर्तव्यं कर्म. नास्ति तत्र फलापेक्षा. यथा हि युष्माकं परिपालने नास्ति मे फलापेक्षा तथैव प्रजानां परिपालने. एवमाचारे राजनि तदीयाः प्रजाः विश्वसन्ति. प्रजाविश्वासो हि राज्ञो महानक्षय्यः कोशः. यो हि यथा वदति तथैव वर्तते च, तस्मिन् सकला जना विश्वसन्तीति सार्वजनीनम्. राजभिश्च विशेषतः स्वोक्तिसत्यत्वपरिपालने सर्वदा सावधानैर्भवितव्यं. यो हि राजा यत्किमप्युक्त्वाऽन्यदेव करोति न तदाज्ञां प्रजाः परिपालयन्ति.

यदा चासन्तुष्टाः प्रजाः स्वाधिपतिनियोगं न परिपालयन्ति तमतिक्राम्यन्ति तदा तद्राज्यमवश्यमेव नश्यति. मया च यावच्चितोडाविजयं पर्णकुटीवासाय शपथः कृतः. तमपूरयित्वा कथमहं राजप्रासादे निवत्स्यामि. युवराज ! त्वमपि मम प्रियः पुत्रः. मम पश्चात्त्वमेवेदं राज्यं लप्स्यसे. तद्यथा प्रजानां पालनं स्वोक्तिसत्यत्वपालनं राज्ञः कर्म तथा पुत्रस्याऽपि पितुरभीष्टपरिपूरणं. यो हि राजा स्वकर्तव्यमकुर्वाण ऐहिके विषयकर्दमे लुठति स समानकर्मणः शुनो नातिरिच्यते. उमराव ! त्वं हि मदीयं कृत्स्नमपि चरितमपश्यः. एतावत्कालमहमेकाकी विरुद्धेष्वप्यखिलेषु राजस्थानवासिषु राजसु प्रबलेन दिल्लीश्वरेण समं कथमयुध्ये इति त्वमपि जानासि. अत्र च प्रधानं कारणं सत्यव्रतत्वमेव.

वत्स! संसारिकेण मानवेन सर्वथा विषयसुखोपभोगे मनः प्राधान्येन न देयम्. अन्यथा सा विषयलालसा क्रमेण वर्धमाना मानवं सर्वथा परतंत्रं विधत्ते. परतंत्रे मानवे तथा पशौ च को वा विशेषः प्रत्युत निर्बुद्धेः पशोरपेक्षया मानव एवातिनीचः. पशुश्च निसर्गत एव बुद्धिरहितः केवलं पारतंत्र्यं भुंक्ते. एष तु बुद्धिमान् मान-

वाधम ईश्वरप्रदत्तां बुद्धिं विषयलालसया निहत्य पारतंत्र्यनरके पतति. एते च मानसिंहप्रभृतयः क्षत्रियराजा न संतोषेण यवनाधिपाय स्वकन्या अदुः किंतु विषयसुखभोगतृष्णया. क्रुद्धो हि दिल्लीश्वरोऽस्माकं राज्यान्यपहरिष्यतीति मन्वाना विषयतृष्णाक्रपणमनसः स्वकुलमकलंकयन्. तद्यो हि स्वकुलमर्यादां तथा स्वस्वातंत्र्यं तथा स्वपूर्वजानां कीर्तिं रक्षितुमिच्छति तेन सर्वथा विषयोपभोगलालसा हेया. यो हि पारतंत्र्यनरके पतितोऽपि दूषितपूर्वजयशाः त्यक्तवंशाभिमान उत्सृष्टमातृभूमिर्जीवति अहं तु मन्ये स न जीवति. जीवति चेत् पशुवत् जीवति न तु मानववत्. मानवानां हि निसर्गतः स्वातंत्र्यं प्रियं. पशवो हि स्वस्वातंत्र्यं रक्षितुं प्रयतन्ते किमुत बुद्धिमन्तो नराः ! तत्त्वमपि वत्स ! तारुण्येन समं वर्धमानां विषयोपभोगलालसां न्यूनीकुरु. एताः कुट्यो जडा अपि चितोडविजयप्रतिज्ञापालने मम गुरवो भवन्ति. धन्यास्ते विमलधवलयशःप्रकरपरिपूरितदशदिशो बाप्पारावळप्रभृतयोऽस्मत्पूर्वजाः. ये च स्वराज्यं सम्यक् परिपालयन्तो राजर्षिसंज्ञामलभन्त. युवराज ! त्वमसि मे पुत्रः. तद्येन मम मुखं धवलं स्यात्तथैव त्वं रात्रिंदिवं वर्तस्व. स्वपूर्वजानां प्रतापसंततिं च यशोराशिं बन्दिजनगीतानि पराक्रमकृत्यानि निशम्य विषयलोलुपमपि मनो निवारय. क्षणभंगुरे जगति यशोलाभाय यतस्व. भगवानेकलिंगस्त्वां यशस्विनं विधाय चिरंजीविनं करोतु इति.

इमं चामृतादपि मधुरं सदुपदेशं योग्यात् सदाचरणतत्परात्पितुर्गृहीत्वा युवराजः क्षणमात्रं शान्तो बभूव परन्तु पुनरपि विषयलालसा वर्धमाना तं स्ववशं चक्रे.

महाराजः प्रतापसिंहश्च चिन्तया प्रथमत एव क्षीणो राजपु-

त्रस्य चित्तवृत्तिमवलोक्य परं खिन्नः स्वप्रतिज्ञापूर्तिमशक्यां मन्वान प्रतिदिनं कृष्णपक्षचन्द्र इव क्षीणतां प्राप.

---

( ३ )

महाराजः प्रतापसिंहः प्रतिदिनं क्षीयमाणशरीरश्चिन्ताक्रान्तमना अतिव्यथाकुलो बभूव. अतिपरिश्रमेण क्षीणमपि तदीयं शरीरं पुनरपि क्षपयितुमिव ज्वरः प्रादुर्बभूव. स तु ज्वरो दिल्लीश्वरपक्षपातीव क्रमेण वर्धमानो महाराजं शक्तिहीनमकरोत्. यो हि महाराजो रात्रिंदिवं युध्यमानोऽपि स्वेदलेशैरभिन्नः कालइव यवनेभ्योऽवाभासत, स एव सम्प्रति द्वित्रपदगमनेनापि अशक्तमात्मानं विभावयामास. राजवैद्यास्तु अहर्निशं सपरिश्रमं प्रयतमाना अपि न तं ज्वरं शमयितुमशक्नुवन्. महाराजश्च तृणमये आसने सुप्तः काष्ठपर्णमयभाण्डः सत्यमेव शरासनपतितं भीष्ममेवान्वकरोत्. सर्वेच स्वामिभक्ताः सेवकास्तथा सामन्ताः परिवृत्य स्थिता महद्दुःखमाप्नुवन्.

अथ महाराजो मेवाडनरेशः प्रतापसिंहः स्वीयमिमं ज्वरं चरममेवेति मन्यमानः स्वस्थचेताः स्वस्य प्रियं मित्रं साळुंब्राधिपतिं रहसि जगाद--मित्र ! अहं ह्यचिरादेव परलोकं गन्ताऽस्मि. अयं हि ज्वरः साधारणो न किंतु प्राणान् हर्तुमागतः काल एव. तत् मदीयान् वनवाससहायांस्तथा मेवाडमेदिनीसेवकान् सामन्तानन्यांश्च सर्वानपि मच्छुभचिन्तकानाह्वय. अहं तैः समं किमपि संलप्य कृतकृत्यः सुखेन पुण्यं लोकं गमिष्यामीति.

स तु परमप्रियमित्रं महाराजस्य निर्वाणकालिकीमिमां वाणीं निशम्य दुःखाकुलोऽपि कर्तव्यपालनाय दूतैः सर्वानपि तांस्तान्

महाराजसेवकानाव्हयत्. श्रुत्वा च ते महाराजमतिरुग्णं शोकाकुला धावमाना महत्या त्वरयोदयपुरमाजग्मुः. तेषु केचन वनवाससहाया वृद्धा वनेचरा अपि आसन् ते तु अतिकृशं क्षीणनयनमस्थिपंजरावशिष्टं विशालं रुग्णं केसरिणमिवाक्रोशन्तं अव्यवस्थितकेशपाशं, वलीवलयालंकृतदेहं तं मेवाडनरेशमालोक्य खिन्नाः सहसा तत्पादयोर्निपत्य व्यलपन्. राजवैद्यास्तु तदाक्रोशं राज्ञः प्रकृतिक्षोभकारिणं मत्वा तान् न्यवारयन् परन्तु अकृत्रिमस्नेहभावास्ते वनेचरा अपि नागरिकश्रेष्ठास्तस्य पुण्यपुरुषस्य पादौ हातुं नाभिलषन्.

महाराजश्च तान् रुदतो वीक्ष्य सधैर्यमवादीत्. वनवासमित्राणि ? वनेचराः ? सम्प्रति शोकस्य क उपयोगः. या ह्यवस्था सर्वेषामपि प्राणिनां भवति सैव ममापि जायते. अवश्यंभाविनि विषये शोकस्य को वाऽवसरः. यो हि प्राणी मृत्युलोके संजातस्तेन यदा कदाऽप्यवश्यं प्राणा उत्सृष्टव्या एव. यथाहि संस्कृते क्षेत्र उप्तानि बीजानि अंकुरान् जनयन्ति तथैव मानवदेहो पितृभ्यां जायते. यथाहि ग्रीष्मे सर्वे तृणांकुरा विनश्यन्ति तथैव समाप्त आयुषि मानवा अपि स्वदेहं त्यजन्ति. तत् समान एवास्मिन् जन्ममरणरूपे सृष्टिनियमे कः खलु शोकस्यावसरः. अस्मिन् मृत्युलोके ये मादृशा वृथा जीवन्तो जननीजठरभारभूताः प्राणानुत्सृजन्ति अवश्यमेव ते शोकार्हाः. ये च बाप्पारावळसदृशा अलौकिकपुरुषार्थशालिनो वीरश्रेष्ठाः सर्वांल्लोकानरक्षन्. सर्वांश्च न्यायेनापालयन्. ते च कीर्तिमयजीवनाः कदापि न म्रियन्ते. धन्याश्च ते ये विपत्स्वपि अत्यक्तस्नेहास्तान् साहाय्ययन्ति. बान्धवाः ? अहं च युष्मान्विहाय शरीरेण त्यक्तोऽपि अत्रैव मानसा वसन्नान्यत्र

गन्तुमिच्छामि. एषा मेवाडमेदिनी मम प्राणेभ्योऽपि प्रिया. यस्यां जनित्वा पुनरपि मृतोऽपि अस्यामेव निवत्स्यामि । सर्वे सामन्ताः ? शूराः क्षत्रियाः ? युष्माकं निष्कामेन साहाय्येनैवेमे दिवसा अस्माभिर्दृष्टाः! धन्यः स वृद्धः प्रधानामात्यो भामसानामा. यत्कृपयैवाऽऽस्माभिः पुनरपीयं मेवाडमेदिनी शत्रुहस्तात् मोचिता. यावत्कालमिमं राजस्थानेतिहासं भारतवासिनो वाऽन्यदेशवासिनो वा जना पठिष्यंति तावत्कालं तेषां हृदये तदमात्यविषयिणी आदरबुद्धिर्बद्धमूला स्यात् ? परिवर्तिनि संसारे कस्य समीपे लक्ष्मीः शश्वत्स्थिता ? यथाहि भूमिः प्रतिदिनं व्यभिचरति तथैव तज्जन्या कन्येव लक्ष्मीरपि. परन्तु चंचलाया लक्ष्म्याः सकाशादचंचलं पार्वणचन्द्रमरीचिधवलं यशः संपादयन्तः सन्तोऽतीव विरलाः. बहवस्तु भूमेः सकाशात् संपादितं धनं पुनरपि भूमौ निक्षिप्य तद्रक्षण आत्मानं पीडयन्तो वृथाऽभिमानेनान्यान् दूषयन्तः क्लेशयन्ति एव. यथा च तेन महत् साहाय्यं कृतं तथैव भवद्भिर्बहु समुपकृतं. अस्तु. सर्वेषामुपकारराशीनहमुच्चारयितुमपि असमर्थः केवलं नमस्कारेण व आदरयामि. इच्छामि च यदि पुनर्जन्मनि राजैव स्यां तदेदृशानेवाकृत्रिमसहायानिति. उक्त्वाचेत्थं राजाऽतिश्रान्तः शुष्ककण्ठः पिपासाकुलोजलं ययाच. युवराजश्च समीपवर्ती सत्वरं जलं पाययामास.

सर्वे सामन्तास्तथा वनेचराः श्रीमेवाडपार्थिवस्येदं प्रेममयमकृत्रिमं भाषणं निशम्यातिशोकाकुला अवदन्—राजराजेश्वर ? मेवाडसूर्य ? त्वादृशो हि राजा सेवकैः सेवार्थमलभ्य एव. सेवकानां सेवाकौशलं स्वाम्यधीनमेव. यथा हि वादकः कुशलः पण्डितः स्यात्तथैव वीणा वदति. नाथ ? किमस्माभिः कृतं. अस्माकं च

सेवकानां सेवा धर्म एव, परन्तु राज्यमदलेशविहीनास्त्वादृशाः प्रजापालनदक्षा भूपालाः कियन्तो वाऽस्मिन् भूतले स्युः? त्वं हि साक्षाच्छंकर एव. कथमन्यथा विषयोपभोगेषु तादृशं ते वैराग्यं. स्वामिन्? उदिते मोंगलराज्ये सर्वेऽपि राज्यस्थानराजा अदृश्यतां ययुः त्वमेव केवलं सर्वदा समप्रकाश इमां मेवाडमेदिनीं प्राकाशयः. त्वं हि न साधारणो नृपः किंतु राजर्षिरेव. प्रायः सर्वे राजानो यथेच्छं प्रजाभ्यः करद्रव्यं संपाद्य यथेच्छं व्ययन्तः सुखोपभोगपराः स्वजीवितं यापयन्ति. त्वादृशास्तु प्रजादुःखदुःखेन दुःखितास्तदपनयनाय प्रयतमाना अतीव विरला राजानः. त्वां हि नरपुंगवमग्रेकृत्य कृत्स्नाऽपि राजस्थानमेदिनी पारतंत्र्यनरकात् मोचनीयेति नो महती वांच्छाऽसीत् सा त्वधुना तव प्रकृष्टं ज्वरं क्षीणं च शरीरं वीक्ष्य न सफला भवेदिति मन्यामहे. किंकुर्मः? जीवा हि सदैव पराधीना ईश्वरेच्छयैव सुखदुःखानि भुञ्जते. इति.

मेवाडनरेशस्तु तेषां स्वामिभक्तानामत्युत्साहकरं भाषणं निशम्यात्मानं धन्यंमन्यमानः सुखेन किंचित्कालं सुष्वाप. शीघ्रमेव प्रबुद्धो विस्तृताभ्यामक्षिभ्यां स्वपुत्रं युवराजं तथाऽन्यानपि प्रियसामन्तान् पश्यन्निदुःखाकुलो बभूव. तं च दुःखायमानं क्लेशपीडितमवलोक्य परमप्रियः साळुम्ब्राधिपतिः स्वहस्तयुगुलं मुकुलीकृत्य विज्ञापयामास–नाथ? किमिति दुःखायसे? ज्ञाततत्वस्य राजर्षेस्तव प्राणाः सुखेन कुतो न यान्ति? किमपेक्षसे? इति. महाराजस्तु तदीयां विज्ञप्तिमिमामाकर्ण्य सन्तुष्टो मेघनिनादेन गंभीरेण ध्वनिना–युवराज? सर्वे सामन्ताः? अहं हि ममेयं मातृभूमिर्मयि दिवंगते यवनराजाक्रान्ता यथा न भवेत्तथा युष्मत् वचनं वांच्छामि. यदि तथा वचनं कश्चन दद्यात्तदा मदीयाः प्राणाः सुखेन

यास्यन्ति इत्युक्त्या श्रान्तः पुनरपि स्वल्पं भागीरथीजलं पीत्वा पुनरप्याह–युवराज ? त्वमस्मिन्नुदयपुरे सर्वा इमा कुटीर्विनाश्य तत्र सुन्दरान् राजप्रासादान् विधाय सुखेन कालं यापयिष्यसि. एते सामन्ता अपि त्वामेवानुकुर्वन्तो मेवाडस्वातंत्र्यचिन्तां मनस्यपि न वक्ष्यन्ति. धूर्तो दिल्लीश्वरः समयाभिज्ञः सर्वान् वो विलासप्रियान् अनवधानमयान् अवलोक्य बहोः कालात् संपादितं मेवाडमेदिनीस्वातंत्र्यमपहरिष्यति. अपहृतेऽपि तस्मिन् अन्यथा यूयमपि स्वविलासभोगार्थं स्वास्थ्यं कामयमाना मानसिंहवत् स्वकन्यां वा भगिनीं वा दिल्लीश्वराय वितीर्य तत्सामन्ततां संपाद्य मया महताऽयासेन संपादितं पावित्र्यं दूषयिष्यथ ? युवराज ! त्वमसि मे पुत्रः. पुत्रस्य प्रधानं कर्म पित्राज्ञापरिपालनं. अहं हि अचिरादेव शरीरेण हीनोऽपि आत्मनाऽत्रैव स्थास्यामि. एतदर्थमेवार्यधर्मे श्राद्धकल्पना साधुभिः स्थापिता. वत्स ! त्वं हि मानसिंहवद्दिल्लीश्वरस्य कृपां संपाद्य स्वस्वातंत्र्यं मा गमय. युवराज ! स्वातंत्र्येण जीवने कष्टशतमपि पारतंत्र्यजीवनसुखशतमतिक्रामति. तात ? तस्मादचिरादेव दिवंगच्छतस्ते तातस्य चरणारविन्दं स्पृष्ट्वा तथा शपथं कुरु. सामन्तश्रेष्ठाः ? यूयमपि मे प्रजा एव. राज्ञश्च सुते वा प्रजाजने वा न कोपि विशेषः. तद्यूयमपि मेवाडमेदिनीस्वातंत्र्यपालनाय युवराजवच्छपथं कुरुत. तत एव मे प्राणा आनन्देन गमिष्यन्तीति.

स च युवराजस्तथा सर्वे सामन्ता मेवाडमेदिनीस्वातंत्र्यरक्षणाय कृतनिश्चयाः सहसोत्थाय पवित्रं राजलक्ष्मीसनाथं तस्य मेवाडसूर्यस्य प्रतापसिंहस्य चरणारविन्दं स्पृष्ट्वा–यावज्जीवं वयं मेवाडमेदिनीस्वातंत्र्यं रक्षिष्यामः यावत्कालमेतच्चितोडदुर्गं यव-

नेभ्यो जित्वा स्वायत्तं न करिष्यामस्तावत्कालमिमाः कुटीर्न नाशयिष्यामः. येन कर्मणाऽस्माकं पवित्रः सिसोदियावंशः कलंकितः स्यात्तथा प्राणात्ययेऽपि कर्म न करिष्याम इति सावेशं शपथं जगृहुः.

---

( ४ )

मेवाडसूर्यः प्रतापसिंहस्तां स्वपुत्रस्य तथा स्वसामन्तानां रम्यां वाणीं निशम्य सानन्दः स्मितमधुरवदनः सर्वेषां प्रणामान् स्वीकृकृत्य ‘ इदानीमहं धन्यः कृतकृत्यः सुखेन स्वर्गं गमिष्यामि ’ इत्युवाच. ते सर्वे सामन्ताः समं युवराजेन तत्रैवोपविष्टाः.

अथ महाराजप्रतापसिंहस्य स्वर्गागमनं देवताभ्यो निवेदयितुमिव प्रभाकरे प्रतीचीं दिशं गच्छति सति, सर्वस्मिन्नपि किरणजाते प्रतापसिंहप्रतापसमूह इव सर्वत्र प्रसरति, कृत्स्नेष्वपि विहंगमेषु दुःखादिव स्वगृहाणि गन्तुं धावत्सु सत्सु निर्मले वियति, स महाराजः प्रतापसिंहः परितः स्थितेभ्यो ब्राह्मणेभ्यः प्रभूतानि दानानि वितीर्य गृहीतयथाविधिप्रायश्चित्तः सानन्दं परितः स्थितान् शोकविव्हलान् अश्रुजलक्लिन्नमुखान् सर्वान् सामन्तान् तथा स्वपुत्रं युवराजं प्रसन्नेन मनसा वीक्ष्य क्षणात् प्राणानुत्ससर्ज !

वाचकाः ! यो हि महाराजः प्राणान्तकरीं यातनामनुभूय मेवाडमेदिनीमरक्षत् स एव क्षणात् सर्वमपि प्रियं वाऽप्रियं वा वस्तुजातमत्रैव त्यक्त्वा परलोकं जगाम. स्वाभाविकी वस्तुस्थितिरियं. एनामीदृशीं ज्ञात्वा सज्जनाः सततमुदासते. यथा हि प्रतापसिंहः सर्वमायुः स्वस्वातंत्र्यपालनायायापयत्तथैव सज्जना अपि कुर्वते परन्तु आसक्तिं विहाय. धन्याश्च ते ब्रह्मर्षयो रामदासप्रभृतयः

साधुवर्याः धन्याश्च ते राजर्षयः प्रतापसिंहसदृशा राजानः. यैर्जनित्वा पवित्रीकृतेयं भारतभूः. अस्तु.

महाराजं दिवंगतमवगम्य सर्वेऽपि मेवाडवासिनस्तदीयाः प्रजाजना अतिशोकाकुला अभवन्. ते च सहसा सर्वतः समागता उदयसागरतीरवर्तिकुटीरस्य पुरस्ताद्विस्तृते प्रदेशे मिलिताः परमशोचन् सर्वे सामन्ताश्च नायकहीनाः सैनिका इव दीना अजायन्त. युवराजस्तु पित्रा रहितः शोकसागरस्याधस्तलं पस्पर्श.

अथ सर्वे ते सामन्ताः साळुंब्राधिपतिमग्रे कृत्वा युवराजं सिंहासनाधिरोहणाय विज्ञापयामासुः. रजपूतक्षत्रियाणां मध्य इयं रीतिरद्यापि प्रचलति यदेकस्मिन् राजनि मृते सति तदीयं शवं तत्रैव निधाय प्रथमतस्तदीयं पुत्रं सिंहासनाधीश्वरं विधाय पश्चात्तं मृतं राजानमग्निसात्कुर्वन्ति. इति. कारणमप्यत्राराजके सिंहासने परचक्रस्यागमनं किंवा प्रजास्वेव कलहप्रादुर्भावभीतिरिति स्पष्टमेव. सोऽपि अचिरादेव पितृमुखात् कर्तव्यं निशम्य संजातधैर्यः समुत्थाय कृतशपथो यथाविधि सिंहासनमध्युवास, ततश्च परममान्यस्य प्रतापसिंहस्य तातस्य शरीरसंस्कारार्थं सर्वं सन्नाहमकरोत्. अचिरादेव महाराजप्रतापसिंहस्य देहः सर्वैरुपचारैरभिषिक्तः सालंकृतस्तपस्वीव सर्वेषां दर्शनार्थं स्थापितः. सर्वतो नग्नासिलताधारिभिः सेवकैः सुरक्षितं निद्रितमिव शान्तं प्रसन्नवदनकमलं समाधिमग्नमिवालोक्य विस्मिता दुःखिताः सर्वे सामन्तास्तथा प्रजाजना वनवाससुहृदो वनेचराः प्रणामैस्तं संभावयामासुः

ततश्च तं महावीरं स्वातंत्र्यभक्तं मेवाडमेदिनीपतिं शिबिकायां निवेशयित्वा सर्वेऽपि सामन्ताः समं प्रव्यथमानेन तेन युवराजेन समं सर्वैश्वर्येण शनैः शनैः श्मशानमाजग्मुः. तत्र च यथाशास्त्रं

सर्वान् संस्कारान्विधाय चन्दनकाष्ठमय्यां चितायां तं देहं निवेश्य सर्वे सामन्तास्तं प्रदक्षिणीचक्रुः तदानीं च शोकाकुलः साळुम्ब्राधिपतिः स्वकर्तव्यपालनाय सर्वान् राजस्थानवासिनः क्षत्रियानुद्दिश्य जगाद.

देशबान्धवाः ! क्षत्रियश्रेष्ठाः ! अयं हि मूर्तः प्रतापो, मूर्तं राजस्थानयशः, मूर्तो देशाभिमानः, जंगमो वीररसः, संचरिष्णु पौरुषं महाराजो मेवाडनरेशः प्रतापसिंहः संप्रति दुर्दैवतोऽकाल एवास्मान् दीनान्विहाय स्वर्गं प्रस्थितः. वयमेवाभाग्या अनेन हानिा महतीं दुःखसंततिं लभामहे. येन हि स्वीयं कृत्स्नमायुर्यवनेभ्यो बलाढ्येभ्यः स्वमातृभूमिरक्षणार्थं व्ययीकृतं. यश्चाकबरेण समं रात्रिंदिवं युध्यमानो मनसाप्यकल्पनीयां विपदमसहत. वनाद्वनान्तरं पर्यटन् अगणितान् क्लेशानसहत. राजराजेश्वरोऽपि दीनवत् पर्णकुटीष्वस्वपत्. सोयं पुण्यश्लोको मेवाडनरेशोऽस्मान्दीनान्विहाय परलोकं प्रस्थितः. क्षत्रियबान्धवाः ! इह जगति को वा चिरंजीवी संवृत्तः ? कोऽपि न. सर्वेऽपि संजाता यावदायुः नानाविधानि कर्माणि कृत्वा समाप्तायुषः परलोकं व्रजन्त्येव. परन्तु स्वबान्धवस्वातंत्र्यपालनार्थं तथा स्ववंशपावित्र्यरक्षणार्थं प्रयतमानाः सफलीभूय दिवं ता जना विरला एव. आसीत् मे मनसि सुतरां यत् महाराजः प्रतापसिंहश्चितोडदुर्गं विजित्य पवित्रचरितैः पूर्वजैर्मेवाडराजैः पवित्रीकृते सिंहासनेऽभिषेक्ष्यनीय इति. परन्तु दुर्दैवेन स मे मनोरथो न सफलीकृतः. अकाल एव महाराजं प्रतापसिंहं हरता दुर्दैवेन केवलं वयमेव न दुःखिताः किंतु राजस्थानवासिनः सर्वेऽपि क्षत्रियाः. अस्तु. सम्प्रति सर्वे वयं मिलित्वा शीघ्रमेव चितोडदुर्गमात्मसात्कृत्वा तत्र तदीयमंशमेव महाराजं नूतनं मेवा-

डाधिपतिमभिषिच्यास्य महाराजप्रतापसिंहस्यानृण्यं संपादयामः सर्वदा च तदीयं व्रतं पालयन्तः परलोके तं सुखिनं विधातुं प्रयतामह इति.

अथ प्रदत्तश्चाग्निरचिरादेव तं महाराजदेहं पंचभूतसाच्चक्रे. ततश्च—सर्वेऽपि जनास्तदीयं गुणगणं ध्यायन्तः स्वस्वगृहाणि ययुः. मानसिंहप्रभृतयः सर्वेऽपि क्षत्रियराजा महाराजस्य स्वर्गगमनं निशम्य दुःखाकुला अभवन्. दिल्लीपतिः शत्रुरप्यकबरस्तदीयगुणगणेन समाकृष्टहृदयो दुःखायते स्म.



# १५ उपसंहारः

१ वचनसत्यता.
२ प्रतिज्ञापालनम्.
३ दृढोद्योगित्वम्.
४ अनुपमं धैर्यम्.
५ विषयोपभोगानादरः

( १ )



वाचकाः ! यस्य चरितं लिखितुं वयमुपक्रान्तास्तस्मिन् महाराजप्रतापसिंहे दिवंगते सति समाप्तकल्पमेव तदीयं कृत्स्नं चरितं. तथापि अन्ते विशिष्य प्रधानगुणानुवादो दर्शनीय इति ग्रंथकाररीतिः तामनुसृत्याहमपि महाराजस्य प्रधानगुणान् अनुवदामि. युक्तं चैतत्— महतां चरित्राणि नाम मूर्ता आदर्शभूताः सदाचारचित्रपटा एव. तेषां पठने के सद्गुणाः के वाऽसद्गुणा इति सम्यक् जानन्ति. तत्र च बालकेभ्यो यदि निष्कृष्य सद्गुणा एव प्रदर्श्यन्ते तदाऽनायासेन तेषां ज्ञानं स्यात्. अस्तु.

सज्जनाः ! सर्वेषु गुणेषु वचनसत्यता नाम गुणः श्रेष्ठः. वाचा हि सर्वे व्यवहरन्ति. मानवानामन्तःकरणपरीक्षायां हि वागेव प्रधानं कारणं. यो हि मानवोऽन्यथा करोति अन्यथा वदति

तस्मिन् केऽपि जना न विश्वसन्ति. जनविश्वासो हि सर्वस्यापि कार्यस्य मूलं. स एव यावत् न संपाद्यते तावत् कार्यं कथं सिध्येत्तस्मात् केनापि लोकोत्तरकार्यकारिणा जनताविश्वासः संपादनीयः. तदर्थं च स्वयं सदा वचनसत्यता पालनीया.

यो हि महाराजः स्वल्पबलोऽपि अपरिमितबलेन दिल्लीश्वरेण चिरं युध्वा स्वस्वातंत्र्यमरक्षत्तत्र कारणं महत्तरमपेक्षितं. कथमन्यथा प्रबलो दिल्लीश्वरस्तमाक्रन्तुमसमर्थोऽभूत्. वाचकाः ! अत्र प्रधानं कारणं स्वकर्मभिः संपादितो लोकानां विश्वास एव. तदीयाः प्रजाजनास्तस्मिन् यथोक्ताचारे निरतिशयं व्यश्वसन्, अयं हि गुणो विशेषतो राजनि न दृश्यते. राजानश्च प्रजाभ्यो नानाविधैरुपायैर्द्रव्यं संपाद्य यथेच्छं व्ययीकुर्वन्तस्तादृशद्रव्यलाभाय प्रजाभ्यो लोभमयानि वचनानि दास्यन्ति. प्रजाश्चैवं भूयोभूयो विप्रलब्धा न तेषु विश्वसन्ति. सम्भूते तु प्रजाजनानामविश्वासे तद्बलाढ्यमपि राज्यं क्षणादेव नश्यति. तस्माद्येन केनापि राज्ञा स्वराज्यं स्थिरं कर्तुं वांच्छता प्रथमतः प्रजाविश्वासः संपादनीयः. तत्राप्यादौ स्वयं वचनसत्यता परिपालनीया, महाराजो मेवाडाधिपतिः कियान् सत्यवचन आसीदित्यत्रैकमेवोदाहरणं ददामि.

यो हि झालावंश्यः स्वामिभक्तः सामन्तो माननामा स यदा हळदीघाटयुद्धे यवनसैनिकैः परिवेष्टितं महाराजं प्रतापसिंहं मोचयितुं तस्य स्थलमतिष्ठत्तदा तस्य स्वामिनिष्ठां वीक्ष्य सानन्दः प्रतापसिंहस्तत्रैव ' अहं त्वां तथा तव वंशजान् न विसरिष्यामि ' इति जगाद. ततस्तस्मिन् नरवरे तत्रैव देहं त्यक्त्वा दिवंगतेऽपि स्ववचनं सत्यं चिकीर्षुस्तदीयान् वंशजान् सम्यगादृत्य राजसभायां

दक्षिणहस्ते स्थातुमादिदेश, तथैवानन्यलभ्यं राजपटहमानमपि तेभ्यो ददौ.

---

## ( २ )

यथा सत्यवचनताऽपि प्रजाविश्वाससंपादने आवश्यिका तथैव प्रतिज्ञापालनमपि. यो हि यत्किंचिदप्यविचार्य प्रतिजानाति प्रतिज्ञातपालनाय न चेष्टते तस्मिन्नपि जना न विश्वसन्ति. महाराजः प्रतापसिंहश्च प्रतिज्ञापालनेऽद्वितीय आसीत्. अत्रापि पूर्वोक्तमेवोदाहरणं.

यदाप्रभृति मारवाडाधीशप्रमुखै राजभिरत्यन्तविषमस्वभावैर्यवनैः समं शरीरसंबंधः कृतस्तदानीं स्वकुलपावित्र्यरक्षणार्थं महाराजः—ये केचन दिल्लीनगरवासिनः क्षत्रियवंशजाः सन्ति तैर्वा तत्कुलजैर्वा समं शरीरसंबन्धं तथाऽन्नव्यवहारं नाहं करिष्यामीति प्रतिजज्ञे. तां प्रतिज्ञां विफलीकर्तुं समागतो मानसिंहः कीदृशमपमानं विषह्य स्वनिवासं ययौ महाराजश्च बहुलां तन्निमित्तां विपदमनुभवन्नपि न स्वप्रतिज्ञां जहौ इति पूर्वं निवेदितमेव. तथैव शरीरसम्बन्धविषये महाराजोऽस्खलितप्रतिज्ञ एव बभूव. अत्रापि पूर्वोक्तामेव कथां कथयामि ।

यदा च महाराजः प्रतापसिंहः स्वकुटुंबेन समं गिरिमध्यमध्युवास तदा तदीयपराक्रमगीतानि सर्वेऽपि राजस्थानवासिनो बन्दिनोऽगायन्. तदानीमेव तत्र दिल्लीनगरे बिकानेरनरेशस्य भ्राता शूरः स्वाभिमानी पृथ्वीराजोऽप्यवसत्. तस्य च भगिनी बहूनां बन्दिनां मुखेभ्यः श्रुतमहाराजप्रतापसिंहकीर्तिस्तत्सेवायां बद्धादरा निभृतं दिल्लीतो निर्गत्यारवलिपर्वतमध्ये वसतो महाराजस्य

सन्निधिं प्राप. स च तां प्रत्यभिज्ञाय स्वसंनिधौ स्थापयामास. अचिरादेव सा युवराजे बद्धप्रेमभावाऽलक्ष्यत. युवराजोऽपि तस्यां. सकलगुणयोग्यामपि तां केवलदिल्लीनगरवासेन दूषितां नांगीचकार स्नुषात्वेन प्रतापसिंहः.

वाचकाः ! सज्जनास्तथा राजर्षय एव स्वप्रतिज्ञां पालयन्ति नान्य इत्यत्रास्ति कारणविशेषः—स चायं—यथा साधारणा जनाः पशव इव कामाकुलास्तच्छान्त्यै यत्किंचिदपि प्रतिजानन्तः पश्चात्तत्परिपालने च कामसुखालाभं पश्यन्तः शीघ्रमेव प्रतिज्ञां घ्नन्ति. सज्जना राजर्षयश्च न लोभाकुलाः किमपि प्रतिजानन्ति. किंतु सम्यग्न्याय्यान्याय्ये विचार्य. ततश्च प्रतिज्ञां विहाय बहुलाभं पश्यन्तोऽपि निरिच्छा निस्पृहा न स्वप्रतिज्ञामुत्सृजन्ति यथाहि साधारणा जनाः कामक्रोधलोभाकुला मनोव्यापाराधीना भवन्ति न तथा सज्जना राजर्षयश्च किंतु लोकोपयोगार्थं चेष्टमानानां तेषां मनः सहायमिति न ते मर्यादामतिक्रामन्ति. एतादृशा जना एव लोकोत्तराणि कार्याणि कुर्वन्ति. ये तु स्वयमेव कामहतास्ते परेषां कल्याणं किं करिष्यन्ति ?

---

## ३

यथाचेमौ गुणौ लोकोत्तरकार्यकरणे परमावश्यकौ तथान्येऽपि. तत्र प्रधानं हि दृढोद्योगित्वं, कानिचित् कार्याणि विलंबेन जायन्ते कानिचित् त्वरितं. तत्रापि—यथा कार्यगौरवं तथा कालाधिक्यमपि. यावता कालेनाम्राः फलन्ति तावतैव कालेनोदुंबरा अपि न. तस्माच्चतुरेण नरेण सदा दृढोद्योगिना भाव्यम्. यो हि उत्साहहीनः सर्वदा स्वकार्यार्थं प्रयततेऽवश्यमेव स तस्योद्योगस्य फलं लभते, वाचकाः!

इह जगति दृढोद्योगिनश्च जना अतीव विरलाः. क्षणमात्रं बद्धोत्साहाः पर्जन्यसमय इव क्षुद्रनद्यः क्षणादूर्ध्वं ग्रीष्मसमय इव समूलमुच्छिन्नोत्साहा एव बहवः. विशेषतश्च भूपालेषु अयं गुणः परं विरलः. प्रायो दीर्घं तपश्चरित्वा भोगभोगार्थं राजवंशे समुत्पन्नाः किमिति दृढमुद्योगं करिष्यन्ति ? अस्तु.

अयं हि गुणो महाराजे मेवाडमूर्ये प्राधान्येनासीत्. कथमन्यथा तादृशादिल्लीश्वरेण हृतसर्वस्वो वने वसन्नुपवासपीडितोऽपि स्वमेदिनीस्वातंत्र्यार्थं परं प्रायतत. नैतावदेव किंतु यदा स्वमातृभूमिं यवनैः सर्वतः समाक्रान्तामात्मानं चासहायं स विभावयतिस्म, तदा तं देशं विहायान्यं देशं गत्वा स्वकुलपावित्र्यं तथा स्वस्वातंत्र्यं रक्षितुं सर्वथा प्रायतत.

महाभागाः ! वाचकाः ! किमेतन्न दृढोद्योगित्वस्य निदर्शनम्. वयं च क्षुद्रमपि कार्यमारभमाणाः परं व्यग्रमनसः स्वल्पेनापि विघ्नेनाभिभूतास्तूष्णीं तिष्ठामस्तदा सर्वस्मिन् राज्ये नष्टे सर्वेषु सहायेषु दिवंगतेषु वा शत्रुपक्षं प्रविष्टेषु वाऽऽरब्धस्योद्योगस्यात्यागो निःसंशयं दृढोद्योगित्वस्य दर्शक इति नास्ति कस्यापि विमतिः. अस्मिन् जगतीतले प्रतिदिनं कति जीवा जायन्ते कति म्रियन्ते न तान् कोऽपि गणयति परन्तु महाराजप्रतापसिंहसदृशा ये नरकेसरिणो जीयन्ते तानेव सर्वे गणयन्ति. तेषामेव यशसा जगत् धवलीक्रियते. तेषामेव पराक्रमगुणाः सर्वत्र गीयन्ते.

---

## ( ४ )

प्रियपाठकाः ! अद्यावधि ये खलु महाराजप्रतापसिंहस्य गुणा वर्णिता मया, तेऽन्यसाधारणा अपि भवेयुः इदानीं च वर्णयितुं

मिष्टश्च गुणः केवलं तस्यासाधारण एव. योऽयं भारतवर्षस्येतिहासः प्रसिद्धोऽस्ति तत्रानेन गुणेन तुलयितुं नास्त्यपरं कस्यापि उदाहरणं. सोऽयं गुणस्तदीयमनुपमं धैर्यं. एतावति महति सकललोकमान्ये कुले समुत्पन्नो नरवीर ईदृशं धैर्यमधारयदिति न दृष्टचरं.

वाचकाः ! तद् धैर्यमपि द्विविधं. कायिकं मानसिकं चेति. यद्यपि सर्वं धैर्यं मानसिकमेव तथापि युद्धे शस्त्रप्रहारक्लेशसहनं कायिकं धैर्यं. विपत्तिक्लेशसहनं मानसिकमिति भेदेन मया द्वैविध्यं निरूपितम्.

तत्र प्रथमे धैर्येऽपि अद्वितीय एवासीत् महाराजः प्रतापसिंहः. यदा च प्रबलेन यवनसैन्येन समं क्षत्रियाणां हळदीघाटस्थले घोरं युद्धमभूत्तदानीं प्रबलशत्रुपक्ष्यवीरैः प्रदत्तान् प्रहारान् बिभ्रदेव महाराजो महता क्रोधेन सेनापतिं दिल्लीराजस्य ज्येष्ठं पुत्रं युवराजं सेलिमाख्यं त्रिराचक्राम. असंख्यनग्नखड्गधारिसैनिकरक्षितस्य दिल्लीश्वरयुवराजस्यैकाकिना समाक्रमणं न साधारणं कर्म. तदपि कुर्वतो महाराजस्य प्रतापसिंहस्य धैर्यमवश्यमेव निरतिशयतामावहति. क्व च रम्या युद्धकथाः क्व च तादृशा अलौकिकवीराधिष्ठिताः प्रसंगाः. एतादृशेष्वपि प्रसंगेषु यो धैर्यं न जहाववश्यमेव तस्य धैर्यं निरतिशयमिति वक्तव्यमेव.

सज्जनाः ! कायिकधैर्यशालिनो बहवो हि पुरुषा अस्मिन् राजस्थानेऽभवन्. एतादृशं मेवाडमेदिन्या एव भाग्यं यत् सा बहून् वीरानेतादृशधैर्यालंकृतानेवाजनयत्. परन्तु यद्धैर्यमवगम्य मयाऽऽलौकिकत्वं महाराजस्य कथितं तच्चरममेव. तच्च महाराज एव परिपूर्णमासीत्. तदेतत्सविस्तरं निरूपयामि.

यदा हि महाराजो दिल्लीश्वरहृतसर्वस्वोऽरवलीपर्वतमध्ये न्यवसत्तदा तस्य निरतिशयाः क्लेशा अजायन्त. तदानीं च तेन समं तस्य पत्नी तथाऽन्येऽपि पुत्रा आसन्. यवनाश्च तं बन्दिनं कर्तुं सततं प्रयतमानाः सर्वतोऽहर्निशमन्वधावन्. तेन महाराजस्यातिक्लेशा अभवन्.

एकदा कोटरप्रबुद्धपक्षिगणे, परिणतचन्द्रप्रभाभासुरे, स्पष्टदृश्यमानतारागणे मलयवातमोदितसकलजने, भक्तप्रवरगीयमानभगवत्संस्तवे, स्वनिवासोन्मुखव्याघ्रादिवनपशौ, सत्वरं धावमानरात्रिंचरे महति प्रत्यूषे यवनसेनां प्रबलसैनिकसमन्वितां शनैः शनैः रागच्छन्तीं यामिककर्मनियुक्तो वनेचरोऽपश्यत्. स च भीतसत्वरमन्यानपि स्वसहायांस्तथा क्षत्रियसैनिकानजागरयत्. तेचाल्पा अपि शूराः स्वामिभक्ताः सहसाऽग्रे भूत्वा तां सेनामरुन्धन्. अन्ये च कतिपये वनेचराः श्रीमहाराजमेवाडाधिपतेः कुटुंबं तस्मात् स्थलादन्यत्रानयन्. तस्मिन्दिने सा यवनसेना प्रबला बहुना कालेन पराजिता स्वनिवासमगच्छत्.

यत्र च वनेचरा महाराजस्य कुटुंबं नीत्वाऽरक्षंस्तत्रापि अन्या यवनसेना समाजगाम. तदा तु ते स्वामिभक्ता अपि वनेचराः संख्ययाऽत्यल्पाः किंकर्तव्यतामूढा अजायन्त. महाराजश्च दूरे प्रबलयवनसेनया समं युध्यमानः. सर्वमपि कुटुंबमत्रास्ते. यदि च सर्वं कुटुंबं यवनानां हस्ते निपतेत्तदा महत् कष्टं स्यादिति मन्यमानास्ते वनेचरा महाराज्ञ्या अनुमत्या तां तथा तदीयान् पुत्रान् रंगखनौ पिधाय स्थापयामासुः तत्र च स्थले गाढान्धकारायां जलपातक्लिन्नायां कीटकारावभयंकरायां निरुद्धवातमलिनायां तस्यां खनौ निवसन्ती सा मेवाडराजपत्नी निर्मलवदनकमला दैत्यत्रासा-

निभृतं तिष्ठन्ती भगवती लक्ष्मीरिव भगवती भारतमातेव बभौ. ते च वनेचरा यवनपीडापरिहाराय तस्या रंगखनेर्मुखं वृक्षादिभिराच्छाद्य स्वयं समुन्नतवृक्षशाखासु न्यलीयन्त. सा तु यवनसेना तत्रागत्य न विज्ञाय तत् स्थलमग्रे जगाम. महाराजश्च तां यवनसेनां पराजित्य निवर्तमानोऽपरां यवनसेनां स्वकुटुंबनिवासमनुप्रयान्तीमवलोक्य खिन्नः स्वकुटुम्बावस्कन्दनं मन्यमानो महता जवेन तत् स्थलमाजगाम. तत्र चादृष्ट्वात्यन्तं चिन्तातुरोऽभूत्. महाराजं समागतमवलोक्य द्वौ वनेचरौ वृक्षादवतीर्य तस्या रंगखनेः सकाशात् महाराज्ञीं सपुत्रां निष्कास्य दर्शयामासतुः ।

मेवाडाधिपतिः प्रतापसिंहस्तां स्वपत्नीं धूसरितसकलवस्त्रां घर्माविलमुखीं दीर्घं श्वसन्तीं तत्समावस्थं युवराजमवलोक्य सानन्दमवदत्—एतदर्थमेव क्षत्रिया जीवन्ति. यथा हि वैश्याः केवलं प्रभूतं धनं संपाद्य तूलमये शयने लुण्ठन्ति नैवं क्षत्रियाः मानधनाः. क्षत्रियाः कायिकानि नाना दुःखानि सहमाना अपि स्वातंत्र्यमेव रक्षन्ति. तदेव हि महद्धनं तेषामिति.

सज्जनाः ! ये खलु साधवस्ते कायिकानि दुःखानि न गणयन्ति तथापि तेषां तथात्वे कारणमपि तत्वज्ञानं. परन्तु ये खलु न साधवस्तेषामपि प्रतापसिंहप्रभृतीनां हृदयेषु यदीदृशी वृत्तिः संजायते तदा तत्रानुपमं धैर्यमेव कारणमिति निःसंशयमंगीकर्तव्यमेव. अतएव तदनुपमं.

---

## ५

पाठकाः ! ये खल्वस्मिन् जगतीतलेऽलौकिककार्यकारिणः पुरुषा अजायन्त, तेषु एकोऽसाधारणो गुणो लक्ष्यते. स च ' नि-

षयोपभोगेऽनादरः ! युक्तंचैतत्. पशवो हि यत् कर्म कुर्वन्ति न. तदलौकिकं किंतु मानुषं कर्म. तत्र पशवो यथा विषयसेवनासक्ता स्तथैव ये मनुष्याः सन्ति न ते मनुष्याः. किंतु मानवरूपधरा. पशवः. तथाच पश्वपेक्षया श्रेष्ठं कर्म यदा मानवः कुर्यात्तदैव स मानवो भवेदिति प्राप्तं. तच्च कर्म परोपकारादिकं. परन्तु यो हि स्वस्य विषयतृष्णां न दूरीकरोति स कथं परानुपकुर्यात् ? परोपकारो नाम स्वसुखं परेभ्यो वितीर्य तेषां दुःखस्य हरणं ! तच्च विषयी कथं कर्तुं शक्नुयात्, तस्मात् परोपकारं कर्तुं वांच्छता जनेन प्रथमं स्वविषयोपभोगवासना नाशनीया. अस्तु.

महाराजो मेवाडाधिपतिर्लौकिकविषयोपभोगे कियद्विरक्त आसीदिति तदीयं कृत्स्नं चरितमेव कथयति. भारतसम्राट् अपारैश्वर्यसंपन्नो दिल्लीपतिः केवलं स्वीयसार्वभौमत्वस्वीकरणाय रात्रिंदिवं प्रायतत, अपारैश्वर्यलोभं च प्रदर्शयामास, परं च स मेवाडनरकेसरी स्वस्वातंत्र्यं हातुं न मनश्चकार. अगणितानि दुःखान्यसहत परन्तु बुन्दीनरेशवत्तस्य स्वामित्वं नांगीचक्रे दूरे च मानसिंहवत् स्वभगिनीदानं. यदि तु महाराजो विषयासक्तोऽभविष्यत्तदा स सानन्दमेव स्वयमागतां दिल्लीश्वरकृपां स्वातंत्र्याभिमानं दूरे विसृज्य शिरसाऽग्रहिष्यत्, यथा च यदि खलु क्षत्रियाधमा मानसिंहप्रभृतयो रात्रिंदिवमैश्वर्यलाभफलां दिल्लीश्वरकृपां लब्धुं प्रायतन्त तथैव मेवाडाधिपतिरभविष्यत्तदा निःसंशयं सोऽपि तथैवाऽचेष्टिष्यत, नैवं बभूव तेन महाराजो मेवाडाधिपतिः परं विरक्त आसीत्.

किंच—यदा हि महाराजः स्वर्गं जिगमिषुरासीत्तदा स्वसामन्तैस्तथा युवराजेन शपथं कारयामास विषयोपभोगासक्तित्यागार्थ-

स स्वयमपि आस्वर्गप्रयाणं कुटीरेष्वेव निवसन् स्वस्य विषयानासक्तिं प्रकटीचक्रे.

वाचकाः! धन्यास्ते राजस्थानवासिनो जनाः, धन्यास्ते प्रतापसिंहप्रभृतयो राजर्षयः, धन्याश्च पतिव्रता अलौकिकशीलशालिन्यो राजस्थानललनाः, धन्याश्च ते चौंडावतसमाः पितृनियोगपरिपालनपराः पुत्राः, धन्याश्च ते सालुम्ब्राधिपतिप्रभृतयः सामन्तश्रेष्ठाः, धन्याश्च ते झालावाडरावप्रभृतयो राजानोऽपि सेवकाः. सज्जनाः! यद्यपि अन्यत्रान्यत्र देशे शूराः स्वामिभक्ताश्च जना अजायन्तैव, तथापि अस्मिन् राजस्थाने यथा प्रायः सर्वएव वीराः स्वामिभक्ता स्वमातृभूमेः सेवकाः स्वाभिमानप्रधाना जना अभवन्नैवमन्यत्र क्वापीति निःसंशयं. धन्यासि राजस्थानभूमिजननि! यावच्चन्द्रदिवाकरं लौकिकसंपद्विहीनाऽपि इमां अलौकिककीर्तिरूपां सम्पदं धारयस्येव. मातः! परममाननीयेन राजर्षिणा प्रतापसिंहेन परिपूता त्रैलोक्यवंद्याऽसि. एषोऽरवलिपर्वतो मूर्तिमान् महाराजप्रतापसिंहस्य प्रतापस्तंभ इव यावद्विराजते तावदखण्डैव तस्य कीर्तिस्तिष्ठेदिति सर्वसम्मतम्. वाचकाः! वयमपि तं राजर्षिं नमस्कारैः संभाव्य तदीयान् प्रतापानहर्निशं ध्यायामः.

